TRIVANDRUM SANSKRIT SERIES.

NO. XIII.

# THE SUBHADRÂDHANANJAYA

OF

# KULASEKHARA VARMA

with the commentary of

SIVARÂMA

Edited

BY

T GANAPATI SÂSTRI

*Curator of the Department for the publication of Sanskrit manuscripts*

TRIVANDRUM

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF
HIS HIGHNESS THE MAHARAJAH OF TRAVANCORE

TRIVANDRUM.
PRINTED AT THE TRAVANCORE GOVERNMENT PRESS
1912

॥ श्रीः ॥

अनन्तशयनसंस्कृतग्रन्थावलिः

ग्रन्थाङ्कः १३.

# सुभद्राधनञ्जयं

महाकविश्रीकुलशेखरवर्मप्रणीतं

श्रीशिवरामकृतविचारतिलकाख्यव्याख्यासमेतं

संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण

त. गणपतिशास्त्रिणा

संशोधितम् ।

तच्च

अनन्तशयने

महामहिमश्रीमूलकरामवर्मकुलशेखरमहाराजशासनेन

राजकीयमुद्रणयन्त्रालये

मुद्रयित्वा प्रकाशितम् ।

कोलम्बाब्दाः १०८७, क्रैस्ताब्दाः १९१२

# PREFACE.

THE book which is now published as its name correctly indicates, narrates in dramatical form, the romance of Subhadra and Dhananjaya described in the celebrated epic, the Mahabharata.

Whatever has to be said of this play and its commentary as also of the dramatist, Kulasekhara-Varma and of the commentator Sivarama has been noted in the preface to the Nataka of the same author, the Tapatisamvarana published as the eleventh volume of the Series.

TRIVANDRUM. T. GANAPATI SÂSTRÎ

# निवेदना ।

श्रीमहाभारतप्रसिद्धं सुभद्राधनञ्जययोः परिणयरूपम् इतिवृत्तमत्रोपात्तमिति सुभद्राधनञ्जयनाम्ना नाटकमिदं व्यपदिश्यते । इदं नाटकम्, अस्य व्याख्यानम्, अनयोः प्रणेतारौ कुलशेखरवर्म-शिवरामौ चाधिकृत्य यद् वक्तव्यं, तद् अस्याः संस्कृतग्रन्थावल्या एकादशाङ्कतया प्रकाशितस्य तपतीसंवरणस्योपोद्घाते प्रपञ्चितम् ।

अनन्तशयनम्. त. गणपतिशास्त्री.

॥ श्रीः ॥

श्रीकुलशेखरवर्मभूपालविरचितं

# सुभद्राधनञ्जयं

श्रीशिवरामकृतविचारतिलकाख्यव्याख्यासमेतम् ।

## प्रथमोऽङ्कः ।

---

(नान्द्यन्ते ततः प्रविशति सूत्रधारः)

**सूत्रधारः**—

लक्ष्मीपङ्कजनेत्रयोः स्मररसप्रस्तावमातन्वतो-
रामीलन्नयनो नवव्यतिकरव्यासक्तलज्जागमः ।
नातिश्लिष्टपयोधरः प्रणयिनोः प्रोद्भिन्नरोमाङ्कुरः
प्रेमार्द्रः प्रथमोपगूहनविधिः पुष्णातु वो मङ्गलम् ॥ १ ॥

---

शिवायाशेषगुरवे शिवायै तद्विदाभिदे ।
आभ्यामनन्यरूपाय मह्यं च सततं नमः ॥

यतः शिवस्याङ्कुरिता विदुषां च कृपा मयि ।
व्याकरोमि यथाबोधं तत् सुभद्राधनञ्जयम् ॥

लक्ष्मीपङ्कजनेत्रयोरित्यादि । लक्ष्मीपङ्कजनेत्रयोः प्रथमोपगूहनविधिर्वो मङ्गलं पुष्णातु । इह दिव्यमिथुनसम्बन्धमवयवपरिस्पन्दपरिकरादिकमेव विश्वानुग्रहायालम् । तत्रापि परिकल्पितभिन्नरूपयोरभेदप्रकाशकस्योपगूहनविधेराधिक्यमिति तस्यैव मङ्गलोत्पादकत्वमाशास्यते । तत्कालानन्धानुगुणं विशिनष्टि—स्मररसप्रस्तावमातन्वतो स्मररसस्य स्मरप्रधानस्य रसस्य शृङ्गारस्य तत्रापि स-

म्भोगरूपस्य प्रस्तावं प्रथमाविष्करणम् आतन्वतोः आ समन्ताद् औत्सुक्यादि-व्यभिचारिदृष्टिपातायनुभावरूपेणान्तर्बहिर्विस्तारयतोः । प्रस्तावविस्तारयोः कथ युगपदवस्थानमिति चेत्, प्रस्तावसामग्र्य प्रतीह विस्तारकथनम् । विभावादि-परिपूर्णतया सुभग प्रस्तावं कुर्वतोरित्यर्थः । तत्र 'शृङ्गारो विष्णुदेवत्य' इत्युक्त्या आत्मदेवत रस सकललोकसग्रहाय स्वस्मिन्नेव प्रकाशयतोरिवेत्युत्प्रेक्षा कर्तृत्वनि-र्देशेन द्योत्यते । प्रस्तावानुगुणमुपगूहनविधिं विशिनष्टि—आमीलन्नयनः ईषन्मी-लन्त्यानन्दानुभूतिवशान्नयनानि यस्मिन् । अत्र नयनमीलनादेः कर्तृनिष्ठत्वेऽप्य नुरागपारवश्येन तदानीं समुल्लासेन परमानन्दप्रकाशकत्वं द्योतयितुमुपगूहनविधि-विशेषणत्वेन निर्देशः । अत एवामीलदिति वर्तमानकथनम् । नवव्यतिकरव्यास-क्तलज्जागम नवेन परिग्रहानन्तरभवेनात एवौत्सुक्यजनकेन व्यतिकरेण संश्लेषेण व्यासक्तो विशेषेणानुबद्धो लज्जागमो लज्जोदयो यस्मिन् । नवेत्यनेन लज्जौचित्य प्रकाश्यत । अत्रात्यौत्सुक्यनिरुद्धाया लज्जायाः स्पर्शावलोकनादिषु क्षणं निवृत्तिः, स्वगौरवेण तदानीमेवोदय इति वारंवारमाविर्भावतिरोभावसुभगत्वमागमशब्देन प्रकाश्यते, अन्यथा व्यासक्तलज्ज इत्येवालम् । नातिक्लिष्टपयोधरः उपगूहनस्य गाढत्वे बालाया अपरिचिताया पीडा भवेत्, स्पर्शमात्रे आलिङ्गनस्यापौष्कल्या-दनुभूतिवकल्यं, तदभावाय नातिक्लिष्टेत्युक्तम् । आश्लेषस्य परिपूर्णतया क्लेशः सह्यत एवेति भावः । प्रणयिनोः प्रेमप्रकर्षरूपेणातिशयितेन प्रणयेन नित्ययु-क्तयोः । अतिशायने नित्ययोगे च मत्वर्थीय. । अत्र प्रेमप्रणयादीनां रतेरवस्था-विशेषाणा कश्चिद् भेदलेशमाश्रित्य युगपन्निर्देशः कविभिः क्रियते 'प्रेमार्द्रा' (मालती. अङ्क ५. श्लो. ७.) इत्यादिवद् । इह—

'इतरेतरसंयोगप्ररूढं मदबृंहितम् ।
यद् गात्राणां सुखकरं प्रणय स निगद्यते' ॥

इत्युपगूहनस्यापि मदकरत्वात् तदानन्दानुभूतिश्च प्रणयशब्देनोच्यते । प्रोद्भिन्नरोमाङ्कुर इति सात्त्विकविकारकथन स्वेदवेपथुप्रभृतीनामप्युपलक्षणम् । प्रेमार्द्र रागप्रकर्षरूपेण प्रेम्णार्द्र अन्योन्यानुसरणं प्रति निष्कैतवत्वरितमनोवृत्ति-विवश । अत्र परिपूर्णस्य प्रणयस्य सामर्थ्येन प्रकाशनमशक्यमिति कर्तृविशेषण-त्वेन निर्देशः, तथापि रसपरिपूर्णकुम्भोच्चलनवद् बलादेकदेशस्य प्रकाशनं घटत इति प्रेम्ण उपगूहनविशेषणत्वम् । प्रथमोपगूहनविधिः प्रथमस्य परिग्रहानन्तर

अलमधुना प्रपञ्चेन । तद् यावत् पारिपार्श्विकमाहूय प्रकृतार्थसिद्धये प्रयतिष्ये । (परिक्रम्य नेपथ्याभिमुखमवलोक्य) मारिष! इतस्तावत् ।

(प्रविश्य)

पारिपार्श्विकः—भाव! अयमस्मि ।

सूत्रधारः—मारिष! अहं खलु तीर्थयात्राप्रसङ्गात् प्रतिनिवृत्तमात्र एव परिषदा समादिष्टः यथा--एतदभिनवं सुभद्रा-

---

भवस्य, अनेनादरातिशयः प्रकाश्यते । उपगूहनस्य उप समीपे अन्याङ्गेन स्वाङ्गसंवरणमिति निरुक्तस्य परमाश्लेषस्य विधिः विधानं निर्वहणावस्था करपरिग्रहादिरूपा । अत्र सिद्धादपि साध्यावस्थस्यानुग्रहक्रियां प्रति जागरणमिति विधिरित्युक्तम्, अन्यथोपगूहनमित्येवालम् । अत्र शब्दशक्त्या यथा विधिः सकलनिर्माणधुरन्धरः, तथोपगूहनविधानस्य मङ्गलपोषणं प्रति सामर्थ्यं व्यज्यते । पुष्णातु स्वसुकृतेनैवाङ्कुरितस्य यावत्फलोदयमुपबृंहणं करोत्वित्याशास्यते । वः युष्माकं सामाजिकानाम् । मङ्गलं सकलपुरुषार्थसिद्धिमूलभूतं दैवानुकूल्यशोभनं शुभम् । अत्र लक्ष्मीपङ्कजनेत्रयोरिति अभ्यर्हितत्वेन पङ्कजनेत्रशब्दस्य द्वन्द्वे पूर्वप्रयोगो चेत्येऽपि लक्ष्मीशब्दस्य पूर्वं निर्देशो मङ्गलदेवतात्वेन । समानानुरागत्वेऽपि स्वयंवरवध्वाः कान्तपरिग्रहं प्रत्यौत्सुक्यातिशयेनाभ्यर्हितत्वादल्पाच्तरत्वाच्च पूर्वप्रयोगः । सूचनीयस्य नायकमिथुनस्यापि तादृशोऽवस्थाभेदः प्रकाशयिष्यते ॥ १ ॥

एवमाशिषं प्रयुज्य सूच्यसूचनायोपक्रमते—अलमधुनेत्यादि । प्रपञ्चेन दिव्यमिथुनचरितव्याप्तिपरिग्रहेण । अधुनेति । इदानीमस्माकमीश्वरप्रसादं पुरस्कृत्यान्यत्रोधम एवालम्भावहेतुः । तद्यावदिति । पारिपार्श्विकं परिपार्श्वे चरन्तम् । प्रकृतार्थो बुद्ध्युपारूढं परिपन्नियोगानुष्ठानम् । प्रयतिष्य इति गौरवेण यत्नसाध्यत्वं प्रकाशितम् ॥

मारिष! इत्यादि । मारिषभावादिशब्दा नाट्यपरिभाषासिद्धाः । तीर्थयात्रेत्यादिना सूच्यानुसारेण स्ववृत्तान्तकथनम् । प्रतिनिवृत्तमात्र एवेति । समादिष्ट

---

१. 'यद् ए' क.पाठः.

धनञ्जयाभिधानं नाटकमखिलविबुधजनकर्णाभरणमिह-
भवता प्रयोगरत्नप्रत्युप्तं करणीयमिति। तदावां सन्नह्यावः।

पारि— कोऽयं कविः कोविदानमून् अभिज्ञानशाकुन्तलप्रमुख-
प्रवरनाटकप्रयोगप्रीणितान्तरात्मनः सम्प्रति निजनिब-
न्धनेन कुतूहलयति।

सूत्र—श्रूयतां सततसंनिहितसरसीरुहाक्षचरणरजोवितानविरजी-
कृतहृदयपुण्डरीकस्य मतिमन्दरमथितमहाभारतपारावार-

---

एवेत्येवकारो भिन्नक्रमो मात्रशब्देनैवावधारणस्य सिद्धत्वात् । सम्यगादिष्टः आदेश एव कृत, नत्वस्माकं तत्र प्रवृत्तिरिति त्वरा सूचिता । यथेत्यादेशकथनोपक्रमः । एतदभिनवमित्यादि । एतदिति प्रबन्धप्रकाशनेनोक्तिः । अभिनवमित्यौत्सुक्यहेतुः । नाटकमखिलविबुधजनकर्णाभरणमित्यारोपपूर्वक. समन्वयः । अखिलेत्यनेन सर्वविद्वत्संवाद· प्रकाशितः । कर्णाभरणत्वारोपेण श्रवणमात्रेण विद्वत्प्रसादजनकत्व नाटकस्य स्फुटीकृतम् । प्रयोगरत्नप्रत्युप्तमिति प्रयोगस्य रत्नत्वारोपेण नाटकस्य दृश्यश्रव्यत्वान्नयनानन्दकरत्वमपि । अत इहभवता पूज्येन त्वया चतुर्विधाभिनयसुभगेन प्रयोगेणाखिलविबुधजननिरतिशयानन्ददायि कर्तव्यमित्यादेशप्रकारः । सन्नह्याव इति । प्रयोगं प्रतीति शेषः । द्विवचनेन सहायान्तरस्यासन्निधिः प्रकाशित· । अत एवोपरि तत्सम्पादनोपक्रम. ॥

कोऽयं कविरित्यादि । कविप्रशंसोत्थापनाय प्रश्न. । अभिज्ञानशाकुन्तलेत्यादि । कालिदासादिसम्बन्धित्वं प्रसिद्धम् । अत एव निजनिबन्धनेनेत्युक्तम् । कुतूहलयति कुतूहलिन. करोति ॥

सततेत्यादि । यस्य वपुरिति श्लोकगतेन यच्छब्देन समन्वय· । अत एव मध्ये वाक्यविश्रान्त्यभावादपि चेति पाठोऽत्र न घटते । अत्र रजोवितानेन विरजीकरणमिति विरोधाभासः । रजश्शब्दस्य गुणवाचकत्वेन परिहार. । परमसात्त्विकस्येत्यर्थः । मतिमन्दरेत्यादि । मन्दरत्वारोपेण मतेः सकलविचारभरसहिष्णुत्वं, पारावारत्वारोपेण भारतस्य निखिलार्थरत्नपरिपूर्णत्वं गम्भीरत्वम्, अमृतसञ्चयत्वारोपेण.

परिगृहीतज्ञानामृतसञ्चयस्य सकलमित्रमण्डलस्वयंग्राह-
गृहीतसारसमुदयस्य तपतीसवरणसघटनापटुतरस्य —

उत्तुङ्गघोणमुरुकन्धरमुन्नतांस-
मंसावलम्बिमणिकर्णिककर्णपाशम् ।
आजानुलम्बिभुजमञ्चितकाञ्चनाभ-
मायामि यस्य वपुरार्तिहर प्रजानाम् ॥ २ ॥

तस्य राज्ञः कलमराशिपेशलकैदारिककेरलाधिनाथस्य श्री-
कुलशेखरवर्मणो निजनिबन्धनमध बध्नाति बुधहृदयम् ।
स च किल कविरेवमनुदिनमाशास्ते—

---

ज्ञानस्य तात्पर्यरूपस्य सकलसमीहितसाधनत्व च प्रकाशितम् । सकलेत्यादिना उचितस्थानविनियोगेन धनस्य साफल्यमुक्तम् । स्वयग्राहगृहीतेति आज्ञापत्रादिक विना स्वबुद्ध्यनुसारेण स्वयगृहीतधनस्येत्यर्थ, अन्यथास्य पारतन्त्र्य प्रकाश्येत । ता मनोवृत्तिमेवापरि स्फुटयति । तपतीसवरणसङ्घटनेत्यादिना पूर्वमेव प्रब धनिर्माणचातुर्य प्रकाशितम् । सङ्घटनापटुतरस्य सङ्घटनाया पटुतरस्य पूर्वमेवातिनिपुणस्य सङ्घटनया निर्माणाभ्यासेनेदानी ततोऽप्यधिकपाटवस्येति वा योज्यम् । उत्तुङ्गघोणमित्यादि विवरण§ व्याख्यातम् ॥ २ ॥ तस्य राज्ञ इत्यादि । राज्ञ इति रञ्जनेन प्रतापेन च उक्तानुक्तगुणपात्रतया च राजशब्दप्रथमाभिधेयस्य । राज्ञो निबन्धनमिति कवित्वेऽप्यस्य राजत्वमिति स्फुरति । कलमेत्यादिना जनपदसमृद्धिरुक्ता । कैदारिक केदाराणा समूह कलमराशिपेशल कैदारिक यत्र तादृशकेरलाधिनाथस्येति बहुव्रीहिगर्भ षष्ठीसमास । पेशल पूर्गम् । श्रीकुलशेखरवर्मण इति 'कवेर्नामानुकीर्तयादि'[1]ति मुनिवचनानुसारेणोक्ति । निबन्धन प्रबन्ध । बुधहृदय बध्नाति अनन्यविषय करोतीत्यर्थ । स च किलेत्यादिना प्रकारान्तरेण कवेर्महत्त्वमुद्घोषयति । किलेति प्रसिद्ध्यनुसारेण । अनुदिनमिति आशासन य

---

१ स्य अपि च उ ख पाठ

§ विवरण तपतीसवरणव्याख्याने

आसिक्तौ ग्रामरागैर्गलदमृतरसैर्भारतीर्भावयन्तौ
कर्णौ नः कालिदासप्रविहितरचनाः कर्णपूरीक्रियास्ताम्।
स्वीकुर्वन्तु स्वकीयं धनमिव सुहृदः स्वापतेयं मदीयं
चेतः पीताम्बरश्च प्रतिभवमभवः पादपीठीकरोतु ॥ ३ ॥

---

नैरन्तर्यं प्रकाशितम् । एवमिति वक्ष्यमाणसङ्ग्रहः । तदेव विशदयति — **आसिक्तावित्यादि** । ग्रामरागैर्ग्रामोद्भवै रागैः । ग्रामशब्देन अपूर्णलक्षणाना देशीरागाणां निरासः । अत्र विचित्रसन्निवेशतालम्बनसुन्दरसम्पूर्णस्वरसमुदायरूपाद् ग्रामद्वयाद् विभागकल्पनया जात्याङ्गानां पूर्णापूर्णादिस्वरभेदानां प्रसव इत्यभिनवगुप्तेन ग्राम-लक्षणं प्रकाशितम् ।

"स्वरवर्णविशेषेण ध्वनिभेदेन वा पुनः ।
रज्यते येन यः कश्चित् स रागः सम्मतः सताम् ॥
योऽसौ ध्वनिविशेषस्तु स्वरवर्णविभूषितः ।
रञ्जको जनचित्तानां स च राग उदाहृतः" ॥

इत्येवं लक्षिते रागैः । आसिक्तौ आ समन्तात् श्रोत्रेन्द्रियस्य कृतार्थतानुगुणमभिव्याप्तौ । तदानुगुण्येन हृद्यतया गलदमृतरसैरित्युक्तम् । पुनः भारतीः साधुशब्दान् अनुसन्धानसहितमाकर्णयन्तौ । पुनः विशेषेण कालिदासप्रविहितरचनाः कर्णपूरीक्रियास्ताम । प्रविहितशब्देन अभिज्ञानशाकुन्तलादिप्रबन्धरूपत्वं प्रकाशितम्, अन्यथा मुक्तकाद्यपेक्षायां रचना इत्येवालम् । रच्यन्त इति रचनाः । कर्णपूरीक्रियास्तामिति इदमेव कर्णसाफल्यमित्याशास्यते । अत्र विशेषणयोरप्याशसोपसङ्क्रमः। अत्र दिनचर्यानुसारेण क्रमकथनम् । प्रातस्तरां बन्दिमुखेभ्यो वीणादिभ्यश्च सरसग्रामरागसमास्वादनं, पश्चाद् देवार्चनाविशेषतया पुराणभारतसहस्रनामादिसमाकर्णनम्, अपराह्णादिषु महाकाव्यनाटकादिषु प्रवृत्तिरिति । क्रियास्तामिति प्रासन्या वा गरूरनाशसनं, नाप्रासन्य प्राप्ति प्रति । यावज्जीवमेवमेव भूयादित्यर्थः । स्वीकुर्वन्त्वित्यादि । मदीयं स्वापतेयं स्वपतौ साधु स्वापतेयं धनपर्यायम् । 'पथ्य'(४-४-१०४)त्यादिना ढञ् । स्वकीयं धनमिवेति । अत्र धनमिति कुलसिद्धं दायादिकं गृह्यते । अनेन स्वत्वबुद्धेर्निश्चयः प्रकाशितः । अत एव स्वीकुर्वन्त्वित्युक्तम्,

पारि—अनुगृहीताः स्मः परिषदा। अत्रभवतः पुनर्दूरस्थितकलत्रत्वादसमग्रसामग्रीकस्य दुष्करमिवैतदधुना पश्यामि।

सूत्र—अस्ति तावदत्रत्या काचिद् गीतसङ्गीतादिषु कलाकौशले-

---

अन्यथा स्वकीयमित्येवालम्। एवमैहिकविषयमाशंसनं प्रतिपाद्य पारत्रिकविषयमाह—चेत इत्यादि। पीताम्बर इत्यनेन किरीटमकरकुण्डलाद्यनुसन्धानविशिष्टत्वं प्रकाशितम्। प्रतिभवं कर्मप्रवाहस्यानिरोध्यत्वात्तदभावं न प्रार्थयामि, भवे भवे यं कञ्चिद् वेशं देशं वानुसरति जन्मनि। पादपीठीकरोतु श्रीमच्चरणारविन्दानुसन्धानपात्रं करोतु। अभव इति भवरहित', तादृशस्य स्वरूपस्य निरन्तरानुसन्धानात्तादात्म्येनास्माकमप्यभवत्व सेत्स्यति, नैतदाशास्यमिति भावः॥ ३॥

एवं कवे रसिकत्वं धर्मपरत्वं वैदुष्यं सुहृदावर्जनकौशलं पुरुषोत्तमभक्तिं च प्रतिपाद्य सूच्यसूचनायोपक्रमते—अनुगृहीताः स्म इति। परिषन्नियोगः सम्मान्यः। तत्साधने वैषम्यं प्रकाशयति—अत्रभवत इत्यादिना। दूरस्थितकलत्रत्वादित्यनेनात्रागन्तुकत्वमेव। अतो नायिकापात्रादिपरिकरसामग्रीविरहादेतन्नियोगानुष्ठानमधुना झटिति दुष्करमिव पश्यामि। मद्बुद्धावेव स्फुरति। तत्रभवान् उपायान्तरेण साधयति चेद्, अवैषम्यम्॥

इत्यत्रोत्तरमाह—अस्ति तावदित्यादि। अत्रत्या काचित् कन्यकास्त्येव। तस्याः प्रयोगपाटवं न चेत्, किं फलम् अत्राह—गीतसङ्गीतादिषु। आदिशब्देन तदुपयोगिन्यो नैपथ्यशिल्पादिकला गृहीताः। कलाकौशलेषु कौशलप्रयोज्यासु कलास्वित्यर्थः। अद्वितीया प्रथमा। तस्या अभिरुचिर्न चेत् कलाकौशलेन किं फलम् अत्राह—मयि निबद्धभावा मयि सानुरागा। निबद्धशब्देन भावस्याचलनीयत्वं प्रकाशितम्। तथापि दातृसापेक्षः कन्यालाभ', अत्राह—विनैकमित्यादि। एक केवल प्रधानं च भ्रातरं वर्जयित्वा अपरैर्बान्धवैः भ्रातृप्रभृतिभिः। अनभिमतपरिणयना अनङ्गीकृतमत्कर्तृकपरिग्रहा। अत्रानभिमतपरिणयनत्वं साध्यविरुद्धम्। अतोऽन्यैरनभिमतपरिणयनापि प्रधानेन भ्रात्राङ्गीकृतपरिग्रहेति वक्तव्यम्। अतोऽन्यनिरोधेऽपि प्रधानेन निर्वाहः। तेन भ्रात्रा मह्यं दित्सितेति विधेयम्। तेन तयैवेत्यवधारणम्। भरतकुलप्रसूता नटोत्तमकुलोत्पन्ना। अभिजन्मसम्पन्नतया ग्राह्येत्यर्थः। प्रस्तुतमर्थं परिषन्नियोगानुष्ठानरूपं साधयामीत्यर्थः। परिग्रहोपायं

प्यद्वितीया मयि निबद्धभावा विनैकं भ्रातरमपरैर्बान्धवैरनभिमतपरिणयना भरतकुलप्रसूता कन्यका । तयैव प्रस्तुतमर्थं साधयामि । कुतः—

स्निग्धां मुग्धां बलतः सोदर्यामपहरामि भरतस्य ।
जित्वा यथा दशार्हान् धनञ्जयो वासुदेवस्य ॥ ४ ॥

(निष्क्रान्तौ)

स्थापना ।

---

(ततः प्रविशति वृद्धतापसः)

वृद्धतापसः—(ऊर्ध्वमवलोक्य) अये प्रत्यासन्न इव मध्यन्दिनसवनस्नानसमयः । चिरात् खलु मया विस्रसाजडीकृतजङ्घा-

---

स्फुटयति — स्निग्धामित्यादिना । स्निग्धता मुग्धता च भरतसोदर्येति च बलात्कारेणाप्यपहारनिमित्तम् । अत्र दृष्टान्तत्वेन सूच्यार्थं स्फुटयति—धनञ्जयो वासुदेवस्य सोदर्यां दशार्हान् जित्वा यथापहृतवान् इति विपरिणामेन सम्बन्धः । अत्र स्निग्धामित्यादि योऽयम् । अत्र 'सूचयेद्वस्तुबीजं वा मुखं पात्रमथापि वा' इत्युक्तत्वात् तीर्थयात्राप्रसङ्गादित्यनेन नायकस्य तीर्थयात्रानिर्वहण सूचितं, सुभद्राधनञ्जयमिति प्रतिपाद्यप्रतिपादकयोरभेदोपचारेण मत्वर्थीयोपश्लेषेण वा नाटकनामकथनेन नायकस्वरूपमपि प्रकाशितं, दूरस्थितेत्यादिना इन्द्रप्रस्थाद् दूरस्थितिः, आत्मन्यनुरक्तायाः सुभद्राया लिप्सा, वासुदेवानुमतिः, बलभद्रादीनां विमतिरित्यादिः दृष्टान्तरूपेण परिग्रहप्रकारश्चोक्तः । एव सूच्यसूचनानन्तरं तयोर्निष्क्रान्तिः ॥

अथ नायकस्य प्रभासतीर्थप्राप्तिरूप नीरसं वस्तु सूचयितुमङ्कात्प्राग्विष्कम्भकं न्यस्यति "आदौ विष्कम्भकं कुर्यादङ्कं वा कार्ययुक्तितः" इति लक्षणानुसारेण । तत्र प्रविष्टस्तापसो वस्तुघटनाय कालं निरीक्ष्याह — अये इत्यादि ।

---

१. 'अपि च स्नि' रा. पाठः.

जवेन प्रभासतीर्थोपकण्ठमुपसर्पणीयं भवेत् । तदधुनैव प्रयामि । (परिक्रम्यावलोक्य) अये को नु खल्वयमधःकृतसुरासुरमनुजलोकस्तेजोराशिरतिथिविशेषस्तपोवनं नः सनाथयति । अपि च—

पादौ चक्रप्रतिकृतिशुभावस्य मूर्धा किरीटी
नेत्रे मात्राभ्यधिकमरुणे द्राघिमाणं दधाते ।
लोहस्थेयानुपचितकिणश्चापमौर्वीविमर्दैः
पूर्वाबन्धस्तदयमपरो वासुभद्रावतारः ॥ ५ ॥

कथं पुनरमी वैखानसा महानुभावस्यास्य समुचितास्वातिथेयीषु सपर्यास्वतिवेलमुदासते । भवतु तावदमूनव-

---

अये इति कालातिपातशङ्कया सम्भ्रमद्योतकम् । मध्यन्दिनसवनस्नानसमयः त्रिषवणस्नानस्य विहितत्वात् । मध्यन्दिनेऽवश्यानुष्ठेयं कर्म सवनं तदर्थं स्नानं मध्यन्दिनसवनस्नानं तस्य समय इत्यलङ्घनीयत्वं प्रकाशितम् । अत एव त्वरा । इवेत्यवलोकनाशक्त्या अभ्यूहनद्योतकम् । प्रत्यासन्न एव नतु प्राप्तः । तत् किं सम्भ्रमेणेत्यत्राह — चिरात् खल्वित्यादि । विस्रसा जरा तया जडीकृतजङ्घाजवत्वं गमनमान्द्ये हेतुः । अये इत्यादि । को नु खल्वयमतिथिविशेषः न सामान्यातिथिः । विशेषमाह — अध कृतेत्यादिना । लोकत्रयातिशायिगौरव इत्यर्थः । तेजोराशिः तेजस्सञ्चय एवायमित्यध्यवसायः । अध कृतेत्यादि तद्विशेषणं वा । सनाथयति अलङ्करोति । नाथ्यैव सर्वत्र शोभाकरत्वमिति तथोक्तम् । अपिचेत्यादिना नायकं निरीक्ष्य सविकल्पकज्ञानप्रकारमाह — पादावित्यादि । चक्रप्रतिकृतिः चक्राकारा रेखा तया शुभौ महापुरुषलक्षणत्वात् । किरीटं शिरसि मुकुटबन्धोचितं लक्षणम् । नेत्रे मात्राभ्यधिकं द्राघिमाणं दधाते मात्राभ्यधिकं विहितप्रमाणाधिकं द्राघिमाणं दैर्घ्यं, गुणे आधिक्यं न दोष इति भङ्ग्या प्रमाणपरिपूर्तिरुक्ता । अरुणे इति गुणान्तरम् । अरुणोपान्ते इत्यर्थः । लोहस्थेयान् लोहवदतिस्थिरः कठिन इति यावत् । अत्र हेतुः — उपचितकिण इति । तन्निमित्तं कल्पयति — चापमौर्वीविमर्दैरिति । मौर्व्या आरूढत्वं प्रकाशयितुं चापग्रहणम् । पूर्वाबन्धः प्रकोष्ठबन्धः । बन्धः न्धिः पूर्वेति प्रकोष्ठः । किणस्य यावत्सन्धि व्याप्तत्वाद् बन्धग्रहणम् । तदिति

गतार्थानापादयामि । भो भोः प्रभासतीर्थतीरतपोवनवासिनस्तपोधनाः! लब्धश्लाघ्यातिथयोऽपि किमिति नातिव्यग्रीभवन्ति भवन्तः ।

कथय कपिल! वाचं सूनृतां त्वं दृढस्यो!
वितर विधिवदर्घ्यं पैल! पाद्यं प्रयच्छ ।
उपहर मधुपर्कं धौम्य! धेनुं घटोध्नी-
मुपनमय सवत्सां वत्स! वात्स्यायन! त्वम् ॥ ६ ॥

(आकाशे) किं ब्रूथ, अनुष्ठितैवेयमस्माभिरस्य समुचिता सपर्येति । तद् यावदहमपि सुगृहीतनामानमेनमाशीर्भिरभिनन्द्य प्रस्तुते कर्मणि व्याप्रिये । (निष्क्रान्तः)

विष्कम्भकः ।

---

उक्तान्यसाधारणानि लक्षणानि निमित्तीकृत्यैवमध्यवसातुं शक्यम् । अपरो वासुभद्रावतारः, भेदे सति तत्तुल्यमिति वक्तुं शक्यं, तस्य लेशतोऽप्यदृष्टत्वाद् वासुभद्रावतारस्यैवान्यत्वमध्यवसीयते ॥ ५ ॥ कथं पुनरित्यादि । वैखानसास्तपस्विनः । अस्य समुचितासु एतद्गौरवानुरूपासु । सपर्यासु स्वागताभ्युत्थानादिषु । आतिथेयीषु अतिथिविषये योग्यास्वित्यकरणे प्रत्यवायः प्रकाश्यते । अतिवेलं भृशम् । उदासते अनास्था दृश्यन्ते । अज्ञानमत्र हेतुरिति परिकल्प्याह—भवत्वित्यादि । अवगतार्थान् ज्ञातवस्तुविशेषस्वरूपान् । तथा सति तदनुरूपा प्रवृत्तिर्घटत इति भावः । भो भो इत्यादि तदुपक्रमः । लब्धश्लाघ्यातिथयोऽपि अतिथिमात्रस्य पूज्यत्वं, तत्रापि श्लाघ्यस्य, तदागमोऽस्माकं लाभ एव । अत एव व्यग्रताभावे अनुपपत्तिः । अतिव्यग्रतैवात्र युक्ता । व्यग्रता सत्कारसम्भ्रमः । अत्र कालातिपातशङ्कया कर्तव्येषु बहून्नियुनक्ति—कथयेत्यादि । सूनृतां वाचमिति प्रथमं स्वागतयोग्यत्वादुक्तम् । मधुपर्कोपहारधेनुसमानयनादीनां सपर्याङ्गत्वेन निर्देशो धर्मशास्त्रप्रसिद्धः । घटोध्नीं सवत्सामित्यनेन धेनुमात्रेण नालमिति प्रकाशितम् ॥ ६ ॥ सुगृहीतनामानं पूज्यनामान-

१. 'भो. प्र' क पाठः. २. 'स्यात' ग पाठः. ३. 'तादियो' ख. पाठः.

(ततः प्रविशति धनुर्बाणपाणिर्धनञ्जयः)

**धनञ्जयः**—(सचिन्तं निःश्वस्य) अहोतुसत्वतीतेऽपि कथञ्चित् तीर्थ-
यात्रानियमयापयितव्ये संवत्सरे—

अम्बास्तन्यमहाभिषेकमुपरि प्रेमाश्रुपातं गुरो-
रार्यस्यापि वृकोदरस्य चरणाश्लेषं यमाश्लेषणम् ।

---

मित्यर्थः । नाम्नोऽनिश्चयेऽपि सञ्ज्ञिस्वरूपेण सुगृहीतत्वं कल्प्यते । प्रस्तुते कर्मणि मध्यन्दिनसवनस्नाने ॥

एवं विष्कम्भकपात्रेण नायकस्य प्रभासोपसर्पणे सूचिते अङ्कादौ नायक-प्रवेशः प्रतिपाद्यते । अथ समासमापनीयं तीर्थयात्रासमयं समतिवाह्य प्रभासोप-कण्ठमुपगतो नायको वीरधर्मनिर्वाहकं शस्त्रमचलम्भमानः स्वजनसङ्गमत्वरितोऽपि वासुदेवसहजां प्रति श्रवणाङ्कुरितां रतिं प्रकृतविरोधिनीमप्यपरिहार्यां रसयन्नुभया-लाभनिमित्तं ध्यानरूपिणीं चिन्तां निःश्वासेन स्फुटयन् पौरुषस्य मनागप्यकार्य-करत्वं निरूप्य प्रस्तुतातिलङ्घनेनाप्रस्तुतविषयामनिवार्याम[3]भिरुचिं दैवप्राबल्यं प्रति कौतुकं पुरस्कृत्याह—अहोतुखल्वित्यादि । अहोतुखलु आश्चर्यम् । एतन्न निरू-पितम्, अस्मत्पौरुषानुगुणं सकलं साध्यमिति पूर्वमध्यवसायः, तथा न फलितं, अत्र विधिवैभवमेव निमित्तं, तच्च दुर्ज्ञेयमिति विस्मयः । सङ्कटेऽपि विधिप्राब-ल्यनिरूपणाद् विस्मयो भवतीति चिन्ताविस्मययोर्न विरोधः । पुनर्विधिकृतं साध्य-वैषम्यं निरूपयति—अतीतेऽपीत्यादिना । कथञ्चिदतिवाहितेऽपि दिवसपक्षमा-सादिपरिगणनपुरस्सरं गुरुजनादिविप्रयोगजनितं दुःखं सोढ्वापि निर्व्यूढे । तर्हि कोऽत्र निर्बन्धः इत्यत्राह—तीर्थयात्रानियमयापयितव्ये तीर्थयात्राव्रतेन परिसमा-पनीये । कृत्यप्रत्ययेनाकरणे प्रत्यवायः सूचितः । संवत्सरे इति तदवधिः पूर्वः समयः । तस्मिन् समापिते । अपीति समय एव साध्यान्तरविरोधित्वेन शङ्कितः, स निर्व्यूढः, तथापि साध्यस्यालाभ इति विषादः । साध्यस्वरूपं प्रकाशयति—अम्बेत्यादि । प्रयाणसमये स्नेहस्नुतपयोधराया मातुः स्तन्येन महाभिषेकः गङ्गाव-गाहनादपि श्रेयस्करम् । नासादयं न प्राप्तवानस्मि । तदेव परमसाध्यमिति प्रथमं निर्देशः । गुरोरिति बहुमानसर्वस्वविषयभूतत्वम् । ततस्तत्स्नेहाश्रुपातस्याप्युपरि

---

१ 'क' ख पाठः  २ 'तथ्या' ख. पाठः  ३ 'दे' क पाठः  ४ 'णमनस' ख पाठः  ५ 'म' ख पाठः.

कृष्णायाश्च कटाक्षवीक्षणसुखं नासादयं, प्रापितः
पुष्पेषोर्विशिखैर्मुकुन्दसहजासन्मार्गपुष्पस्पृहाम् ॥ ७ ॥

(पुनर्विचिन्त्य सानन्दम्) अथवाऽवञ्चित एवाहममुना कुसुमधन्वना । कुतः—

धार्यमाणस्य स्तन्याभिषेकयौवराज्यमुद्वोढुं सामर्थ्यम् । *तदपि नासादयम् ।'चरणाश्लेषमिति स्नेहचापलेन तस्य सर्वाङ्गीणाश्लेषोपक्रमेऽपि विनयेन हठात् पादग्रहणं प्रकाशितम् । पुनः यमाश्लेषणं यमयोर्यमलयोर्द्वन्द्वजातयोर्युगपत् प्रत्येकं वा समालिङ्गनम् । अत्र प्रकरणेन झटिति प्रकृतार्थप्रतीत्यामङ्गलार्थस्फुरणनिह्नवः । कृष्णाया इत्यादि । प्रथमदर्शने गुरुजनसन्निधेः समयालाभाच्च आश्लेषादेरप्यतिलोभनीयत्वाच्च सप्रेमकटाक्षपातस्यैव लभ्यत्वमिति सुखमित्युक्तम् । एवं साध्यानामहमहमिकया विशिष्टानां न सिद्धिरित्येव न, अन्यदपि साध्यं दुर्लभमप्यन्तरा स्वातन्त्र्यनिरोधिना परप्रयत्नेनानिवार्यतया प्रादुर्भूतमित्याह — पुष्पेषोर्विशिखैरिति । साधनत्वेऽपि प्राबल्येन कर्तृत्वनिर्देशः । विशिखानां कर्तृत्वमारोपितम् । मुकुन्दसहजासन्मार्गपुष्पस्पृहां मुकुन्दसहजेति सम्बन्धेनैव स्पृहणीयत्वं, किं पुनः श्रुतेन रूपचातुर्येण । अत एव सन्मार्गपुष्पत्वारोपः । सद्भिर्मृग्यत इति सन्मार्गः स्वर्गः तत्पुष्पे सुरतरुकुसुमे, अतिलोभनीयत्वेन दुर्लभत्वेन च सुरतरुकुसुमत्वारोपः, स्पृहाम् अनिवार्यामभिरुचिम् । प्रापितः प्रयोजकव्यापारस्य प्राबल्येन दुर्लभत्वेऽप्यनिवार्या रतिर्जाता । नासादयमिति स्वातन्त्र्यमाध्यस्य निह्नवः । प्रयोजकव्यापारसिद्धस्य पुरस्सरत्वम् । तत्रापि दुर्लभत्वान्न निश्चय इति च चिन्ता । अत्र सन्मार्गपुष्पमिति गगनकुसुमनिर्देशेऽपि दुर्लभत्वमेव निमित्तं नात्यन्ताभावः, तथा सति स्पृहायाः सङ्गतिर्न स्यात् । मुकुन्दसहजायाश्च गगनकुसुमादिवदव्यावहारिकमेव सत्त्वमिति विरोधः ॥ ७ ॥ एवम् 'अन्योन्यानुबद्धं परस्परानुपघातं त्रिवर्गं सेवेत' इति शास्त्रविरुद्धां स्वरुचिमाशङ्क्य पुनरपि स्वयमेव साध्याविरोधं निरूप्याचिन्तितपरमप्रयोजनप्रेरकतया मदनवृत्त एव सर्वसाध्यधुरन्धरत्वमिति निश्चित्य सानन्दमाह — अथवेत्यादि । समयानन्तर बन्धुजनसङ्गमनिरोधेन दुर्लभस्पृहासम्पाद-

१. 'भाव्य' ख. पाठः. २. 'न वि' ख. पाठः. ३. 'न स्पृ' ख. पाठः. ४. 'म' क. पाठ. ५. 'वि' ख पाठः. ६ 'तत्र' नि' ख. पाठः.

* तदपि अनुरागलक्षण साध्यमपि.

व्यालोलहारमुरसा तरसा समेत्य
लक्ष्मीकुचाङ्कितमुरः परिपीडयानि ।

---

नेन चास्य वञ्चकत्वं निरूपितम् ।

"अदानं च प्रतिश्रुत्य विसंवादनमेव च ।
कालस्य हरणं चाहुः प्रत्यादानं च वञ्चनम् ॥"

इति लक्षितत्वाद् विसंवादविपर्ययेमेरणाद् वञ्चकस्य शङ्कितम् । विमर्शेऽन्यथा स्फुरति । यद्यसावत्र स्पृहां नाजनयिष्यत्, सकलपुरुषार्थधुरन्धरे वस्तुनि स्मृतिर्नाभविष्यत् । अतः स्पृहाद्वारा तद्बोधनादवञ्चकत्वमेवास्य । अनुगृहीत एवाहममुनेत्यवधारणम् । कुसुमधन्वना मृदुना परिकरेण भुवनविजयित्वमस्य श्लाघ्यमेव, उचितकारित्वात् । एवं मदनं समान्य स्मारितं प्रति प्रवृत्तिमध्यवस्यति — व्यालोलेत्यादिना । तरसा समेत्य दर्शनार्थम्, दर्शने च वेगमवलम्ब्य समीपं प्राप्य । सुहृद उरः उरसा परिपीडयानि परितः पीडयानि न किञ्चिदप्यवशेषयामि । पीडनेन गाढत्वं लक्ष्यते । सुहृद इत्युपगूहनयोग्यत्वम् । लक्ष्मीकुचाङ्कितमिति परदेवतायाः स्तनयोरेव भगवदुरःपीडनयोग्यत्वं, तस्य लाभादहं सर्वसम्पत्पात्रभूत इत्यात्मनि श्लाघा व्यज्यते । व्यालोलहारमिति तत्कालविशेषणम् । भगवतोऽप्युपगूहनौत्सुक्येन व्यालोलहारत्वं, क्रियाविशेषणं वा । अत्र गाढत्वेन त्रुटनशङ्कया हारव्यालोलत्वमुत्प्रेक्ष्यते । परिपीडयानीति प्राप्तकाले लोट् । इदमिदानीं प्राप्तकालमित्यर्थः । पुनः

"दूरादेवाभिगमनं स्पष्टार्था हृदयानुगा ।
वाक् सत्कृत्य प्रदानं च त्रिविधो मित्रसङ्ग्रहः ॥"

इति न्यायानुसारेण जनार्दनस्य सखे! किरीटिन्! इत्यक्षराणि शृणवानि चेति युगपदनेकानन्दकन्दसमुद्भवः प्रकाशितः । सखे! किरीटिन्! इति अपात्रभूते मयि कारुण्याविष्कृतसौहार्दप्रकाशकानि माधुर्येण मधुरसस्यन्दीनि भगवद्वदनकमलविनिर्गतत्वात् पञ्चाक्षरकल्पान्यक्षराणि शृणवानि च । अत्र नेत्रयोः श्रोत्रयोस्त्वचश्च युगपदिव जन्मकार्यं भवेत् । जनार्दनस्येति धर्मविरोधिसंहारकत्वाज्जननानिरोधित्वाद्धर्ममोक्षयोः, लक्ष्मीपतित्वादर्थस्य, सुहृद इत्यनेन

"आत्मवान् मितवान् युक्तो भावज्ञो देशकालवित् ।
अलभ्यामप्ययत्नेन श्रियं साधयते नरः ॥"

---

१ 'हृ' ख पाठः. २ 'य' ख पाठः. ३ 'रमदे' ख. पाठः

श्च्योतन्मधूनि सुहृदश्च सखे! किरीटि-
न्नित्यक्षराणि शृणवानि जनार्दनस्य ॥ ८ ॥

(समन्तादवलोक्य) अहो महानुभावता महितमहिम्ना तपोधनानाम्। इह हि—

शिखिनि शलभो ज्वालाचक्रैर्न विक्रियते पतन्
पिबति बहुशः शार्दूलीनां स्तनं मृगशावकः।
स्पृशति कलभः सैंहीं दंष्ट्रां मृणालधिया मुहु-
र्नयति नकुलं निद्रातन्द्रीं लिहन्नहिपोतकः ॥ ९ ॥

अये सर्वैरेव सखीबालैर्मुनिभिर्माध्यन्दिनसवनस्नानाय प्रभासतीर्थं प्रति प्रचलितैः शून्यीकृतोऽयमाश्रमाभोगः। सखा च मे कौण्डिन्यः कौसीद्यादद्याप्यध्वनि मन्दायते तदधुना निकषा तपोवनमत्रस्थितस्यास्य वटविटपिनः प्रच्छाये प्रतीक्षिष्ये वयस्यागमनम्। (प्रवेशं नाटयात)

---

इति कामतन्त्रोक्त्या समीहितस्य स्पृहाविषयस्य च सिद्धिर्भगवत्सेवनेनैव भवेत्। अतस्तदर्थं प्रयतिष्य इत्यभिप्रायः ॥ ८ ॥ अहो इत्यादि। महितमहिम्नां पूजित-तपःप्रकर्षजनितगौरवाणाम्। महानुभावता तत्फलरूपा दुर्घटघटनापटुता। तपोधनानामिति स्फुटमेवेषां तपोधनत्वम्। शिखिनीत्यादिना अहिंसारूपस्य यमाङ्गस्य फलं प्रकाशितम् ॥ ९ ॥ प्रचलितैः गतैः। शून्यीकृतः विजनीकृतः। आभोगः परिपूर्णता। कौसीद्याद् आलस्येन। 'तन्द्रा कौसीद्यमालस्यमि'ति (यादवः)। मन्दायते विलम्बितगतिर्भवति। निकषा तपोवन तपोवनसमीपे। प्रच्छाये बहुलायां छायायां 'छाया बाहुल्ये' (२-४-२२) इति नपुंसकत्वम्। प्रतीक्षिष्ये, तदनागमनमेव गमनविलम्बने हेतुः, मुनिसत्कारस्य पूर्वमेव परिगृहीतत्वात्। इति निरूप्य तत्र स्थितः ॥

---

१. 'भ्रमा इ' ख. पाठः.

(नेपथ्ये)

(क) भो भो भअवन्तो महेसिणो भिक्खं देध भिक्खं देध।

**धनञ्जयः**—(कर्णं दत्त्वा) अये कौण्डिन्यस्यैवायं भिक्षायाचनस्वनः ।

(ततः प्रविशति श्रमालसो विदूषको भिक्षापात्रहस्तः)

**विदूषकः**—(ख) भो भो भअवन्तो महेसिणो! भिक्खं देध भिक्खं देध । (परितो विलोक्य) अहो सुण्णाणि सव्वाणि उडअब्भन्तराणि । (निःश्वस्य) अहो अधण्णस्स मम उदरभाअधेअस्स पहावो, जो णिच्चसण्णिहिदतवोधणं पि तवोवणं सुण्णं करेइ । अहव मम एव्व एसो दोसो, जेण तहिं जुहिट्ठिरमन्दिरे जण्णसेणीकरअमळसंसग्गसुहअं चउ-

(क) भो भो भगवन्तो महर्षय.! भिक्षां दत्त भिक्षां दत्त ।

(ख) भो भो भगवन्तो महर्षय·! भिक्षां दत्त भिक्षां दत्त । अहो शून्यानि सर्वाण्युटजाभ्यन्तराणि । अहो अधन्यस्य ममोदरभागधेयस्य प्रभावः, यो नित्यसन्निहिततपोधनमपि तपोवनं शून्यं करोति । अथवा ममैवैष दोषः, येन तत्र युधिष्ठिरमन्दिरे याज्ञसेनीकरकमलसंसर्गसुभगं चतुर्विधमाहारजात-

भगवन्तो महर्षयः! भिक्षां दत्त भिक्षां दत्तेति मुनिसान्निध्यं परिकल्प्योक्तिः। पुनरदर्शनेन खिन्न आह—अहो अधन्यस्य ममोदरभागधेयस्य प्रभावः, यो नित्यसन्निहिततपोधनमपि तपोवनं शून्यं करोति । अधन्यताभागधेययोरसमन्वयाद् विरुद्धलक्षणया निर्भाग्यत्वमुक्तम् । शून्यं करोति[2] निर्भाग्यतायाः सामर्थ्यमेवेदम् । अतो दैवकृतं, न[1] मत्पौरुषदोष इत्येवं निरूप्य पक्षान्तरमाह—अथवेत्यादि ।

१. '(कः) वि' क. पाठः. २. 'ति नि' ख पाठः.

व्विहं आहारजादं अट्ठासीईसहस्साणं ह्लादआणं मज्झे णिक्खपत्तीसु अणुवहुञ्जिअ एदस्स सव्वसाइंणो तित्थअत्ताकामुअस्स पिट्ठदो आहिण्डीअदि[2]। एत्थ उणं तवोवणे आहारस्स कहा वि ण आसादिज्जइ। तौ[3] जळासअं अण्णेसिअ पिवासामत्तस्स वि दाव पडिआरं करिस्सं। (परिक्रामन्नग्रतो विलोक्यं सहर्षम्) एसो समुद्दप्पमाणो जळरासी दीसइ। एत्थ गदुअं[6] जावमणोरहं पाणीअं पिबिस्सं। (सत्वरमुपसर्पति)

धनञ्जयः—कष्टमसौ मृगतृष्णिकया समाकृष्यते तपस्वी। तदेनं निवारयामि। सखे! कौण्डिन्य! मा मा व्यर्थपरिश्रमो भूः। इतस्तावदागम्यताम्।

---

मष्टाशीतिसहस्राणां स्नातकानां मध्ये निष्क्रान्तीष्वनुपभुज्यैतस्य सव्यसाचिनस्तीर्थयात्राकामुकस्य पृष्ठत आहिण्ड्यते। अत्र पुनस्तपोवने आहारस्य कथापि नासाद्यते। तद् जलाशयमन्विष्य पिपासामात्रस्यापि तावत् परिहारं करिष्यामि। एष समुद्रप्रमाणो जलराशिर्दृश्यते। अत्र गत्वा यावन्मनोरथं पानीयं पास्यामि।

---

ममैवैष दोषः, येन तस्मिन् युधिष्ठिरमन्दिरे याज्ञसेनीकरकमलसंसर्गसुभगं चतुर्विधमाहारजातमष्टाशीतिसहस्राणां स्नातकानां व्रतिनां 'स्नातकस्त्वाप्लुतो व्रती'। मध्ये निष्क्रान्तीष्वनुपभुज्यैतस्य सव्यसाचिनो निस्सामान्यव्यवसायस्य तीर्थयात्राकामुकस्य पृष्ठत आहिण्ड्यते गम्यते॥

---

१. 'दि' ख. पाठः. २. 'द' क पाठः, 'दि मए ए' ग. पाठः. ३. 'ता पुणो वि ज' क. पाठः. ४. 'सम्यागतोऽग्रतो' ग पाठः ५. 'पत्र) ए'.ख. पाठः. ६. 'अ मणोरहं पूरिस्स पा' क. पाठः. ७. 'नरभु' ख पाठः

**विदूषकः**—(विलोक्य) (क) कहं वअस्सो मं णिवारेदि । (ससंरम्भम्) भो पत्थ! तित्थपिसल्ळ! कीस अहं तिण्हादाहदड्ढाए जीहाए तिहाअमत्तसेसं एदस्सिं जळासए अप्पायअंतो तुए णिवारिदो ।

**धनञ्जयः**—मूर्ख! नैष जलराशिः । पश्य—

ज्वलदवनिभिरातपावलेपैरतिजडनेत्रमरीचिरंशुभर्तुः ।
उपचितबहलप्रतापशक्तीनुदकमयानभिमन्यसे मरीचीन् ॥१०॥

**विदूषकः**—(संप्रधार्य) (ख) एव्वं एदं । भो ण एसा केवळं मिअतिण्हिआ, अज्जप्पहुदि बह्मणतिण्हिआ वि संवुत्ता । किं

(क) कथं वयस्यो मां निवारयति । भोः पार्थ! तीर्थपिशाच! कस्मादहं तृष्णादाहदग्धाया जिह्वायास्त्रिभागमात्रशेषमस्मिन् जलाशये आप्याययंस्त्वया निवारितः ।

(ख) एवमेतत् । भो नैषा केवलं मृगतृष्णिका, अद्यप्रभृति ब्राह्मणतृष्णिकापि संवृत्ता । किमेतेन । त्वं तावन्मारुतिसोदर. पेशलजङ्घाबलस्त्रिचतुरैः पदक्षेपै-

---

**तित्थपिसल्ळ!** तीर्थपिशाच! पिशाचग्रस्त इवेतस्ततो भ्रमन् । विसल्ळेति पाठे शल्यशब्देन पीडाकरं पापं लक्ष्यते । तदभावाद् विशल्यत्वम् । एवं सत्यय निषेधो न युक्त. । दोपस्य प्राबल्य प्रकाशयति— तृष्णादाहदग्धायाः तृष्णारूपेण दाहेन, दह्यतेऽनेनेति दाहो ज्वलनस्तेन दग्धाया दग्धप्रायायाः । त्रिभागमात्रशेपं तावन्मात्रमवशिष्टम् । अस्मिन् जलाशये आप्याययन् निमज्जयन् । त्वया मद्वैपम्यनिवारकेण ॥

**ज्वलदवनिभिरि**त्यादिना मृगतृष्णिकास्वरूप बोधयति । ज्वलन्ती अवनिः यैर्हेतुभिः । मरीचीनां प्रभाप्रसर एवातप', अवलेप' प्रचण्डता । मरीचीनां प्रतापबाहुल्येनैतत्प्रसररूपाणामातपानामवनि ज्वलयित्वोर्ध्वप्लवन भवति । ततस्तन्मध्ये नयनरश्मीना जाड्येनावलोकनाशक्त्या निवृत्य नयनयोरेव सङ्कोचो भवति । तदा तेजसि जलभ्रमः ॥ १० ॥

एवं बोधिते तस्य मृगतृष्णिकाबुद्धिर्जाता । अतस्तदनुवादेन कथयति— **न केवलं मृगतृष्णिकेति** । मृगाणां तृष्णाजननाद्धि मृगतृष्णिकेति युक्तिमनुसृत्य

१. 'व तत्रैव भ्र' स. पाठ.　२ 'ब्रतवाद्धि' स. पाठ.

एदिणा। तुवं दाव मारुइसोदरो पेसळजङ्घाबळो तिचउरेहि पदक्खेवेहि अहिमदं देसं पाविदुं पारेसि। अहं पुण दुब्बळपादसञ्चारो णिच्चबुभुक्खिओ जोळणजाळुग्गारिहि तरणिइरणेहि दूमिओ तत्तपंसुपडळे मग्गे भूळदाविसेसो विअ इदोतदो ळुढन्तो कहं कहं वि आअदो। ता पुणो वि जळासअं अण्णेसामि। (परिक्रामन्नूर्ध्वमवलोक्य) भो वअस्स! पेक्ख पेक्ख। अच्छेरं अच्छेरं। एसो को वि अआळजळधरो अक्कन्दन्तीं कं पि अपुव्वं अइरप्पहं उच्छङ्गे करिअ धावेइ।

**धनञ्जयः**—किं नु खल्वयमुद्दिश्य प्रलपति माणवकः। भवतु पश्यामस्तावत्। (परिक्रम्योच्चैर्दत्तदृष्टिः) सखे! नायं

रभिमत देशं प्राप्तु पारयसि। अहं पुनर्दुर्बलपादसञ्चारो नित्यबुभुक्षितो ज्वलनज्वालोद्गारिभिस्तरणिकिरणैर्दूनस्तप्तपांसुपटले मार्गे भूलताविशेष इवेतस्ततो लुठन् कथकथमप्यागत.। तत् पुनरपि जलाशयमन्विष्यामि। भो वयस्य! पश्य पश्य। आश्चर्यमाश्चर्यम्। एष कोऽप्यकालजलधर आक्रन्दन्तीं कामप्यपूर्वामचिरप्रभामुत्सङ्गे कृत्वा धावति।

प्रहसनोक्ति.। ज्वलनज्वालोद्गारिभिः। दूमिओ दूनः उपतप्तः। ज्वलनज्वालोद्गारित्व पांसुपटलतापस्यापि निमित्तम्। भूलताविशेषः क्षुद्रसर्गसर्पविशेषः। इतस्ततो लुठनं समानधर्म.। अथ श्रवणाङ्कुरिताया रतेर्लब्धावसरतया प्रसरणं प्रतिपादयितुमेकस्या एव नायिकाया. प्रथम भेदप्रतीतिपुर सरं दर्शनं प्रतिपादयितुं विदूषकभ्रमेणोपक्रमः। आक्रन्दन्तीमित्यचिरप्रभाया अपूर्वतासमर्थनम्॥

किं नु *खल्वुद्दिश्येति। प्रलापप्रकारेणैव भ्रमन्दपत्वं सिद्धम्। तदाधिष्ठानं किमिति जिज्ञासा। पश्यामस्तावद्, अस्य भ्रमनिमित्तमिति शेषः। झटिति

१. 'प्रलपसि' च पाठ.

* 'अयम्' इत्यसमगन्त निमग्न वा मन्यते व्याख्या.

तडित्त्वानम्बुधरः । अयं हि धूमप्रकरधूम्रः प्रमथः कामपि कन्यकां प्रसह्याकर्षति । (सक्रोधम्) आः, दुरात्मन्! अतिनृशंस! तिष्ठ तिष्ठ ।

आक्रन्दन्तीमनाथामिव मम मिषतः कन्यकां कृष्यमाणां
मुक्त्वैनां याहि नो चेदुदयगिरिशिरोवर्ष्मणः कृष्णधाम्नः।

तत्स्वरूपं ज्ञात्वा तत्र कोपमिश्रमयुक्तत्वं निरूप्य तत्र दत्तदृष्टिरेव तद्भ्रमं निरस्यति — सखे! इति । मत्सखित्वस्य नेदमनुरूपं मौढ्यम् । नायमित्यादि । नायमम्बुधरः, नेयं तडित् । इति भ्रमस्वरूपं निरस्य किं तर्हीति जिज्ञासायां तदधिष्ठानं बोधयति — अयं हीति । धूमप्रकरधूम्रः प्रमथः । धूम्रत्वकथनेन तस्य जलधरत्वभ्रमे कृष्णतानुवृत्तिमधिष्ठाने घटयति । कामपि कन्यकामिति बोध्यम् * । तदनुवादेनाक्रन्दननिमित्तमाकर्षणमवबोधयति । एव तद्भ्रमं निरस्य कन्यकापरिरक्षणायोपक्रमते — आ इत्यादि । आ इति कोपद्योतकम् । दुरात्मन्निति । तव दौरात्म्यं नृशंसत्वं चानुचिताचरणेन ज्ञातम् । तदस्मन्नयनगोचरस्य तव निरोधनमेव युक्तम्। अतस्तिष्ठेति। निर्बन्धाभावे गमिष्यामीति चेद्, निर्बन्धोऽस्ति, न गमनमनुमोदामह इति पुनस्तिष्ठेति कथनम् । आक्रन्दन्तीमित्यादि । पुनः पुनः क्रोशन्तीम्। अनाथामिव,अनाथात्वं तद्बुद्ध्यनुसारेण। अनाथाहमिति तत्प्रतीतिः। अत एव रक्षितारमाक्रन्दन्तीम् । मत्सन्निधौ सनाथैवेयम् । अत इवेत्युक्तम् । मम मिषतः रक्षाधिकारिणं पश्यन्त मामनादृत्य कृष्यमाणामेनां कन्यकां मुक्त्वा याहि । यस्याः कर्षणकर्मत्वं तस्याः मोचनकर्मत्वं पश्चादित्यन्वादेशविषयत्वम् । अपराधगौरवेण वध्यत्वेऽप्येतन्मोचनमेवास्माकमपेक्षितं,पुनर्गच्छ वा तिष्ठ वेत्यनास्थया कथनम् । निग्रहभीत्या प्रथममेतदुपमर्दनं मा करोतु, अस्यां मुक्तायां पुनर्निरूपयाम इति तथा कथनम् । अत्र कामचारानुज्ञाने लोट् । अतो मुक्त्वेत्यत्र विधेयत्वं सेत्स्यति । अत एवाकरणे प्रत्यवाय प्रकाशयति — नो चेदित्यादिना । भूतधात्रीं तव सितभसितापा-

* बोध्यमित्यनेन कामपीत्यस्य कन्यकामित्यर्थकथनम् । मूलकोशयोस्तु 'कन्यकाम्' इत्यपि पठ्यते.

आग्नेयास्त्रास्यनिर्यद्बहलशिखिशिखाश्रेणिनिर्दग्धमूर्तेः
सोऽहं सद्यो विदध्या तव सितभासितापाण्डरां भूतधात्रीम्॥ ११ ॥

(शर सन्धत्ते)

**विदूषकः**— (सविस्मयम्) (क) भो वअस्स! अच्छेरं अच्छेरं। एदस्स दिव्वसरस्स पुङ्खेण सन्दट्ठमत्ताअं मोव्वीअं तिउरदाहवेळाअं विअ तिहुवणं पळित्तं। मोक्खे उण सच्चळोअट्ठिअस्स सरोआमणस्स वि पाणसंसअ त्ति तक्के-

---

(क) भो वयस्य[1] आश्चर्यमाश्चर्यम्। एतस्य दिव्यशरस्य पुङ्खेन सन्दष्टमात्राया मौर्व्यां त्रिपुरदाहवेलायामिव त्रिभुवन प्रदीप्तम्। मोक्षे पुन सत्यलोकस्थितस्य सरोजासनस्यापि प्राणसंशय इति तर्कयामि। तत् प्रतिसंहरैतम्। एप

---

ण्डुरा विदध्याम् इत्यन्वय । सोऽह रक्षितृगोत्रसम्भूत अह त्वत्कर्मसाक्षी । आग्नेयास्त्रस्य मुखान्निर्यतीभिर्बहलाभि शिखिशिखाश्रेणिभिर्निर्दग्धमूर्ते । अत्र मूर्तिमूर्तिमतोरभेदेनोदयगिरिशिरोवर्ष्मत्व कृष्णधामत्व च मूर्तिविशेषण मूर्ति समासे गुणीभूतस्य मूर्तिमद्विशेषणत्वेनोक्तम् । अत्र प्रमाणे गिरिशिरोवर्ष्मण इत्येवालम्। उदयसम्बन्धेन कृष्णधामत्वेन चतत् प्रकाशित — मूर्तेर्दह्यमानावस्थायामेकदेशे ज्वलनरूपत्वम् अन्यत्र कृष्णरूपत्वम् । अत उदयकाले तम प्रकाशमिलितेनोदयाद्रिणा साम्य स्फुरति । सद्य इति । न कालान्तरमपेक्षित प्रागेव मुञ्चेत्यभिप्राय । सितेति । उक्तप्रकारेण शिखिशिखाश्रेणीना गौरवेण दुर्दाहो न भवेत् । अतोऽस्मासमपि दग्धत्वाद् भस्मनो धावल्य भवेदिति दार्ढ्य स्फुटीकृत । अत एव भूतधात्रीधवलीकरण घटते । भस्मरूपेणापि मृतस्य तव धारणादपि भूमेर्भूतधात्रीत्व विशदयामीति च भूतधात्रीशब्देन प्रकाश्यते ॥ ११ ॥

अत्र शरं सन्धत्त इति क्षिप्रहस्तत्वेऽपि भीषयित्वा कन्यामोचनमेवात्रापेक्षित, भवितव्यतावशेन मारीचस्थेन तस्य निरसनमिति स्फुरति ॥

सन्धानमात्रेण फलितमर्थमाह विदूषक —सन्दष्टमात्रायां गाढ स्पृष्टमात्राया त्रिभुवन प्रदीप्तम् । मोक्षेऽनिष्ट भवेत् । समीहितसिद्धिरधुनैव जाते स्यात् — एसो उणेत्यादि । स्फुरन्ती भ्रमन्ती शोभमानाम् ॥ .

---

१ 'स्यं साध इति सु' क पाठ

मि । ता पडिसंहर एदं । एसो[1] उण पमहाहमो तं कण्णअं फुरन्तिं मोत्तूण तुरिअंतुरिअं[2] पळाअदि ।

**धनञ्जयः**—बाढम् । (प्रतिसंहरति)

(नेपथ्ये)

(क) रक्खह मं रक्खह मं ।

**धनञ्जयः**—(ससम्भ्रमम्) अहो अत्याहितम् । सैषा प्रमथकरमुक्ता प्रायशश्छिन्नपातं पतति । तदवलम्बे तावदेनाम् । (प्रसारितकरास्तिष्ठति)

(ततः प्रविशति पतन्ती कन्यका)

**कन्यका**—(ससम्भ्रमम्) रक्खह मं रक्खह मं ।

(धनञ्जयः सत्वरं कराभ्यामवलम्ब्य भूमाववतारयति)

**कन्यका**—(ससाध्वस सकम्प च धनञ्जय तिर्यक् पश्यन्ती स्वगतम्) (ख) को णु खु एसो महाणुभाओ तेळ्ळोक्कदुळ्ळहरूवादिसओ मं अणुकम्पेदि ।

---

पुनः प्रमथाधमस्तां कन्यका स्फुरन्तीं मुक्त्वा त्वरितत्वरित पळायते ।

(क) रक्षत मा रक्षत माम् ।

(ख) को नु खल्वेष महानुभावस्त्रैलोक्यदुर्लभरूपातिशयो मामनुकम्पते ।

---

*शरप्रतिसंहरणानन्तरं पतन्त्या रक्षतेति प्रलपितं श्रुत्वौत्सुक्यसम्भ्रमाभ्या*-मूर्ध्वमवलोक्याह — **छिन्नपातं पतति** छिन्नवत् पततीति पतने पारवश्यं प्रकाश्यते । अत एवालम्बनार्थं प्रागेव करप्रसारणम् ॥

सत्वरमवलम्ब्येत्यादिना प्रथमं रक्षणानुगुणमेव कर्तव्यमिति बुद्धिः स्फुरति ॥

अथ नायिकायाः प्रथमं धनञ्जयनिबद्धरतेः पश्चाद् भूतहस्तपरिग्रहाया-स्तस्मिन्नेवान्यथाप्रतीतिपुरस्सरं रतिप्रसरणं प्रतिपादयति — **को नु खल्वित्यादिना** ।

---

१. 'सो वि प' मूलकोशयोः पाठः.    २. 'अ प' क. पाठः.

**धनञ्जयः**— (सस्पृहं सरोमविक्रियं च स्वगतम्)

चलकुवलयधाम्नोरञ्जनस्निग्धमक्ष्णो
भयचलधृति युग्मं केयमालोलयन्ती ।
मुखपरिमललोभाद् भृङ्गदत्तानुयात्रा
शिथिलयति सुभद्रामुद्रितं मानसं मे ॥ १२.॥

---

एप महानुभावः एवमनुभावोऽन्यस्य न दृष्ट इति बहुमतिः, त्रैलोक्यदुर्लभरूपातिशय इत्यनेन रागलसितं, मामनुकम्पते दुःखितां मां प्रति दयां करोतीति स्नेहश्च प्रकाश्यते ॥

अथ नायकस्य पूर्वं श्रुतां सुभद्रां प्रत्यङ्कुरितरागस्येदानीं दर्शने मनसस्तत्त्वानुसारेण स्पृहामन्यथाप्रतीतिपुरस्सरमनुभावमुखेन प्रकाशयति । अत एव रोमाञ्चः । चलेत्यादि । इय का, किंजातीया, किंदेशीया, किंसम्बन्धेति विचारः । अक्ष्णोर्युग्ममालोलयन्ती व्यालोल कुर्वती । भयचापलेनेति हेतुरत्र कल्प्यते । तात्कालिकीं शोभा विशदयति — चलकुवलयधाम्नोरिति । मन्दमारुतान्दोलितयोः कुवलययोरिवानयोर्धाम । अञ्जनस्निग्धमित्यनेन सांस्कारिकस्य गुणस्य प्रकाशनम् । मुखपरिमलेत्यादिना भृङ्गानुयात्राया उपपत्तिकल्पनम् । सुभद्रामुद्रितमिति । सुभद्राशब्दश्रवणे तदनुरूपरूपानुसन्धानवशादिदमन्यत्र न प्रसरत्विति तया स्वीकृत्य स्वगुणपाशेन बद्ध्वा मुद्रितम् । अत्र मुद्रणे विशिष्टाया नायिकायाः कर्तृत्वनिर्देशे तच्छिथिलीकरणकर्तृभूताया अपि विशेषो जिज्ञासित इति वितर्क एव बोध्यत्वं शिथिलीकरणायोग्यतया दृढीकृतम् । मे गुरूपदेशविनयादिना स्वाच्छन्द्येन चेतोवृत्तिमनवलम्बमानस्य मानसं शिथिलयति हठान्मुद्रापरिमोचनेन स्वीकर्तुमुद्यमं कुरुते । एकया मुद्रितं तयैव शिथिलयितुं युक्तम् । अत इयं केति सस्पृहं विचारः । अत्र केयमिति वि-कें (म्बो ? वा)च्ये शिथिलीकरणस्यानुवादो युक्तः शिथिलयन्ती केति । अतो विचाराभिनयेन पूर्वत्रापि गौरवमासाद्य शिथिलयन्ती केति विधेयम् ॥ १२ ॥

अथ नायिकाया अन्यथाप्रतीत्या नायके प्रेमोल्लासमनुभावमुखेन प्रकाशयति । तत्र प्रथमं महानुभावत्वं गुरूपत्वं दयापरत्वं च निर्धार्य रागोदये

**कन्यका**—(दीर्घं निःश्वस्य स्वगतम्) (क) अहो अदिविसमसीळदा वम्महस्स, जं भूदअरविमद्दकादरं अण्णगआणुराअं च इमं पि जणं उद्दिसिअ पहरन्तो वन्धइत्तणं आरोवेदुं आढत्तो।

**धनञ्जयः**—(सवितर्कं स्वगतम्)

क्षिप्तक्षौमौ प्रकम्पादुरसिजकलशावुच्छ्वसत्पत्रभङ्गौ
मीलन्नीलाम्बुजश्रीरनतिमुकुलितो मुग्धपातः कटाक्षः।
रोहद्रोमाञ्चभाजः श्रमजलकणिकाभ्युद्गतिर्गण्डसीम्नो-
र्भीत्या किं वा कियत्यामपि मदनदशायाममुष्याः प्रवेशात् ॥१३॥

(क) अहो अतिविषमशीलता मन्मथस्य, यद् भूतकरविमर्दकातरमन्यगतानुराग
चेममपि जनमुद्दिश्य प्रहरन् वधकत्वमारोपयितुमारब्ध।

तदनुसारेण मदनशरपीडामसहमाना निरूपयति—अहो इत्यादिना। विषमशील-
त्वमनुचितारम्भेण कल्प्यते। तदेव स्फुटयति—भूतकरविमर्दकातर भूतकरविम-
र्देन पीडनेन कातर मरणशङ्कयातीव भीत रागस्फुरणायोग्यचित्तम्। तथाप्यन्यत्रा-
भिरुचिर्न चेन्नातीव वैषम्यम्। तथा च न। अन्यगतानुरागम् अन्यत्र बद्धरतिम्।
इममपि जनमुद्दिश्यापीति। एतद्दर्शनेऽन्यत्र विरागश्चेद् नातीव पीडा। तथाच न।
तमिम च जनमुद्दिश्य द्विशाखतया मनस प्रेरणा विधाय प्रहरन् वन्धकीत्व पुंश्च-
लीत्व बलात् सम्पादयितु प्रवृत्त इति विषमशीलत्वम् ॥

एव नायिकाया अनुरागे द्विशाखतया प्रतिपादिते[2] तदवस्था प्रति नाय-
कस्य विचारमाह। सवितर्कमित्यनेन सशयपरकाष्ठा प्रकाशिता। स्थाणुर्वा पुरुषो
वेत्यादिषु कोटिद्वयावलम्बी सशय। वितर्कस्तु द्वयोरेकस्मिन् प्रायोनिश्चयरूपतया
कलनम्। सोऽत्र प्रकाश्यते। निश्चयात्मको वितर्क। अनुभावप्रावल्यनैकपक्ष आ-
धिक्यमवलम्ब्य विमृशति—क्षिप्तेत्यादिना। अमुष्या इयमवस्था भीत्या किं कि-
यत्यामपि मदनदशाया प्रवेशाद् वा इति विकल्प। उभयत्र किं वेति योजनेन
वा। अवस्था प्रकाशयति—उरसिजकलशौ प्रकम्पात् क्षिप्तक्षौमौ। अत एवोच्छ्व-

१ 'श्य द्वि' क पाठ    २ 'त ए' ग पाठ

**कन्यका** – (क) को णु खु मं पुणो वि कड्ढेइ। (निष्क्रान्ता)

**विदूषकः**—(ससम्भ्रमम्) (ख) अविहा, एसा का वि जक्खिणी णो भक्खेदुं अदंसणं उवगदा। अहो मम भग्गदोसो, जं भूदसंभमेण अन्तरिअबुभुक्खापिवासस्स अण्णारिसो पाणसंसओ उवणदो। ता पळाअह्म।

(क) को नु खलु मा पुनरपि कर्षति।

(ख) अविहा, एषा कापि यक्षिणी नौ भक्षयितुमदर्शनमुपगता। अहो मम भाग्यदोषः, यद् भूतसम्भ्रमेणान्तरितबुभुक्षापिपासस्यान्यादृशः प्राणसंशय उपनतः। तत् पलायावहे।

सत्पत्रभङ्गौ। प्रकम्पस्य भयनिमित्तत्वमतिस्फुटं, तेन क्षौमस्य स्तनकञ्चुकस्य क्षेपः, तेन स्तनतटनिहितस्य पत्रभङ्गस्य गाढबन्धाभावादुच्छ्वसनं त्वग्विश्लेषेणेषदुन्नमनम्। अत्र भीतिहेतुत्वं स्पष्टम्। उच्छ्वसनस्य रोमाञ्चगर्भत्वेन वर्तमानत्वेन च मदनदशाप्रवेशः शङ्क्यते। अत एव रोमाञ्चस्य नायिकायां सर्वाङ्गीणत्वं प्रकाश्यते। कटाक्षस्य मुग्धपातत्वं भीत्या, स्वेदरोमाञ्चयोरुभयत्रोपपत्तिः। तत्र भयरूपस्य कारणस्यातीतत्वादिदानीमनुपपत्तिः 'उच्छ्वसद्' 'रोहद्' 'अभ्युद्गतिरि'ति विशेषणैः प्रकाश्यते। प्रकम्पस्य भीतौ प्राबल्यम्। सा च परिस्फुटा। मदनदशाप्रवेशहेतुर्न परिस्फुट। अत एव कियत्यामपीत्युक्तम्। अनिश्चितविषयत्वमनिर्देश्यगौरवत्वमतिलोभनीयत्वं च मदनदशायाः कियत्यामित्यनेन प्रकाश्यते। अत्रानेनेदमिति न निर्धार्यते। तत्तु भीत्या वा प्रवेशाद् वेति वितर्करूपेणोपसंहारः। प्रवेश इति पाठेऽपि वितर्करूपेणोपसंहारो युक्तः, वितर्कस्य वाक्यार्थव्यापित्वात्। प्रवेश इति निश्चये मयीयं रक्तेति भावभूते व्यभिचारिमुखेन क्रमपरिपोषो न घटते। तस्मात् प्रवेशादिति युक्तः पाठः ॥ १२ ॥

कड्ढेइ कर्षति ॥

कापि यक्षिणीति तस्याः सौरूप्येऽपि भक्षणप्रवृत्तत्वादुक्तिः, अन्यथा राक्षसीति वक्तव्यम् ॥

१. 'को म' क. पाठः, २. 'हा मा क पाठः, ३. 'त.' ख. पाठः.

धनञ्जयः—(स्वगतम्) हन्त क्षणभङ्गुराणि भाग्यविलसितानि, यदनयोर्नयनयोरपर्यवसित एव विधिना समाच्छिन्नोऽयममृतपानोत्सवः। (प्रकाशम्) मूर्ख! न सा दिव्यकन्यका। तस्याः खलु—

घर्माम्भःकणिका कपोलतलयोरालुप्तपत्राक्रिया
नेत्रेन्दीवरयोः प्रतिक्षणकृतप्रस्पन्दिते पक्ष्मणी।
पादौ स्पृष्टभुवौ स्थलाम्बुरुहयोः प्राप्तौ प्रतिस्पर्धितां
म्लायन्ति स्म शनैर्मिलन्मधुकरा धम्मिल्लमालागुणाः॥१४॥

---

भाग्यविलसितानि विधिसहकृतस्य पूर्वपुण्यविभवस्य प्रसरणानि। क्षणभङ्गुरत्वं दुर्लभत्वात्। हृद्यतातिशयेनामृतत्वारोप.। अत्र अपर्यवसित एवेति विषादः, विधिना समाच्छिन्न इति विधिं प्रत्यसूया, अमृतपानोत्सव इत्यौत्सुक्यं च व्यज्यते। (न) दिव्यकन्यकेति सामान्यनिषेधात् तद्विशेषभूताया यक्षिण्या निषेध. सिद्ध इति भावः। पारिशेष्यान्मानुषीति सिध्यति। अत एवोपरि मानुषीत्यनुवादः। तस्याः खल्वित्यादिना निषेधमुपपादयति। खल्विति संवादविशिष्टे विचारे। घर्माम्भःकणिका कपोलतलयोरिति। कपोलतलयोरित्यनेन घर्माम्भसो दौर्भाग्यहेतुक सर्वाङ्गीणत्वं निरस्तम्। अत एव कणिकेत्युक्तम्। आलुप्तपत्रक्रिया ईषल्लुप्तपत्ररचना। लक्षितेति शेषः। स्वेदोदयोऽमानुषीत्वनिषेधकमेकं लक्षणं, पुनः पक्ष्मस्पन्दभूस्पर्शमालागुणम्लानयः। स्थलाम्बुरुहयोः प्राप्तौ प्रतिस्पर्धितामिति। तदानीमिति शेषः। शनैरित्यनेन परिमलबाहुल्यस्यापरिक्षयान्मधुकरमेलनस्य योग्यत्वमुपपादितम्। अत्र पक्ष्मणी इति नेत्रेन्दीवरयोरित्यत्रोपमायाः साधकम्। अत्र कपोलतलयोरित्यधिकरणनिर्देशात् पक्ष्मसु पादयोरित्यादिनिर्देशाभावात् प्रक्रमभङ्ग इति न शङ्कनीयं, कवेर्लक्षणमात्रकथने संरम्भात्।

"रोदनाद्दतिनिःश्वासाद् भूमिसंस्पर्शनादपि।
न त्वाहं देवतां मन्ये प्रस्वेदोद्गमनादपि॥"

इति श्रीरामायणोक्तिमनुसृत्यैवमुक्तिः॥ १४॥

---

१. 'तपानला' ख. पाठः. २. 'णे नि' क. पाठः.

विदूषकः— (क) भो पण्डिदग्गेसर! कहं पुण माणुसीए तिस्से तिरक्खरणीसंभवो ।

धनञ्जयः—वयस्य! तत्राप्येष एव मे तर्कः । अन्तर्हितेन केनाप्यन्तर्धानमुपनीतया भवितव्यम् ।

विदूषकः—(ख) जइ एव्वं, रक्खिदो अहं देव्वेण[2] । (सकरुणम्) सा उण तवस्सिणी पुणो वि तेण च्चिअ भूदेण णीदत्ति तक्केमि ।

धनञ्जयः—सखे! मा मैवम् । न खलु मञ्जुजपरिघसकाशवर्त्तिनीं तां भूयस्तर्कयिष्यन्ति परिपन्थिनः । तन्मन्ये बान्धवैरपवाहितेति ।

विदूषकः— (ग) भो अदिपण्डिदेण[3] वि कदाइ असंबद्धं मन्तिदव्वं होइ । जइ सा माणुसी, कहं पुण तिस्से बन्धवा अत्ताणं तं च अदंसणं णेदुं इस्सरा होन्ति ।

धनञ्जयः—मूर्ख! गरुत्मद्वाहनबाहुविहितक्षेमक्षितिमण्डलवर्त्तिनीनां प्रजानामापदि सम्बन्धिन्यो देवताः ।

(क) भो पण्डिताग्रेसर! कथं पुनर्मानुष्यास्तस्यास्तिरस्करणीसम्भवः ।

(ख) यद्येवं, रक्षितोऽहं दैवेन । सा पुनस्तपस्विनी पुनरपि तेनैव भूतेन नीतेति तर्कयामि ।

(ग) भो अतिपण्डितेनापि कदाचिद् असम्बद्धं मन्त्रयितव्यं भवति । यदि सा मानुषी, कथं पुनस्तस्या बान्धवा आत्मानं तां चादर्शनं नेतुमीश्वरा भवन्ति ।

सां तर्कयिष्यन्ति नेतुमिति शेषः ॥

गरुत्मद्वाहनेत्यनेन गरुडकर्तृकं नयनं कविना सूचितम् ॥

१ 'क-ग' क. पाठ. २ 'ण । सा' क पाठ ३ 'देहि वि' क. पाठ. ४. 'कं' ख. पाठ.

**विदूषकः**—(क) भो एदस्सिं विवादे तुह मए दिण्णो जओ । अण्णं किं पि रहस्सं पुच्छिस्सं । तदाणिं तिस्से पहासूईहि णिरवसेसं दुक्खअं मे अक्खिजुअळं । तदो मए ण सा दिट्ठा । केरिसो तत्तहोदीए रूवादिसओ ।

**धनञ्जयः**—(निःश्वस्य) सखे ! मन्ये ममापि वाचस्तद्रूपातिशयवर्णनास्वपर्याप्तनैपुणाः । एतावत् तु कथयामि—

सौन्दर्यं सुकुमारता मधुरता कान्तिर्मनोहारिता
श्रीमत्ता महिमेति सर्गविभवान् निश्शेषनारीगुणान् ।
एत[2]स्यामुपयुज्य दुर्विधतया दीनः परमात्मभूः
स्रष्टुं वाञ्छति चेत् करोतु पुनरप्यत्रैव भिक्षाटनम् ॥ १५ ॥

(क) भोः एतस्मिन् विवादे तव मया दत्तो जयः । अन्यत् किमपि रहस्यं प्रक्ष्यामि । तदानीं तस्याः प्रभासूचीभिर्निरवशेषं दुःक्षतं मेऽक्षियुगलम् । ततो मया न सा दृष्टा । कीदृशस्तत्रभवत्या रूपातिशयः ।

उक्तप्रकारेण तस्यां नायकस्य रतिस्फुरणमालक्ष्य तत्परिपोषबुभुत्सया कीदृशो रूपातिशय इति प्रश्नः ॥

नायिकागुणवर्णनानुगुणं[3] प्रश्नवचनं संमान्य चिन्तानुभावरूपं निःश्वासमवलम्ब्य सखे ! इति विस्रम्भानुगुणं सम्बोधनम् । सखे ! मदवस्थासर्वस्ववेदी त्वम् । अतः किं न कथयामि । ममापि साधु दृष्टवतोऽपि । अपर्याप्तनैपुणाः रूपातिशयस्य समृद्धौ निरूप्यमाणायामन्तरा वाचा दारिद्र्यमेव भवेत् । तर्हि मत्सब्रह्मचारित्वमेव भवत इति चेत्, तन्न । एतावत् परिमितमुत्तरं समष्टिरूपं सङ्गृह्य कथयामि । व्याप्तिरत्र यथामति निरूप्यतामिति भावः । सौन्दर्यमित्यादि ।

'उ' ख. पाठ  २ 'क' ख. पाठ.  ३. 'ण तत्र' ख पाठः

विदूषकः—(क) भो पण्डिदग्गेसर! कहं पुण माणुसीए तिस्से तिरक्खरणीसंभवो ।

धनञ्जयः—वयस्य! तत्राप्येष एव मे तर्कः । अन्तर्हितेन केनाप्यन्तर्धानमुपनीतया भवितव्यम् ।

विदूषकः—(ख) जइ एव्वं, रक्खिदो अहं देव्वेण[१] । (सकरुणम्) सा उण तवस्सिणी पुणो वि तेण च्चिअ भूदेण णीदत्ति तक्केमि ।

धनञ्जयः—सखे! मा मैवम् । न खलु मञ्जुजपरिघसकाशवर्त्तिनीं तां भूयस्तर्कयिष्यन्ति परिपन्थिनः । तन्मन्ये बान्धवैरपवाहितेति ।

विदूषकः—(ग) भो अदिपण्डिदेण[३] वि कदाइ असंबद्धं मन्तिदव्वं होइ । जइ सा माणुसी, कहं पुण तिस्से बन्धवा अत्ताणं तं च अदंसणं णेदुं इस्सरा होन्ति ।

धनञ्जयः—मूर्ख! गरुत्मद्वाहनबाहुविहितक्षेमाक्षितिमण्डलवर्त्तिनीनां प्रजानामापदि सम्बन्धिन्यो देवताः ।

(क) भो पण्डिताग्रेसर! कथं पुनर्मानुष्यास्तस्यास्तिरस्करणीसम्भवः ।

(ख) यद्येवं, रक्षितोऽहं दैवेन । सा पुनस्तपस्विनी पुनरपि तेनैव भूतेन नीतेति तर्कयामि ।

(ग) भो अतिपण्डितेनापि कदाचिद् असम्बद्धं मन्त्रयितव्यं भवति । यदि सा मानुषी, कथं पुनस्तस्या बान्धवा आत्मानं तां चादर्शनं नेतुमीश्वरा भवन्ति ।

तां तर्कयिष्यन्ति नेतुमिति शेषः ॥

गरुत्मद्वाहनेत्यनेन गरुडपृष्ठेनयन कविना सूचितम् ॥

१ 'र-[illegible]' क. पाठ. २ 'ण। सा' क पाठ ३. 'दिहि वि' क. पाठ. ४. 'स' क. पाठ.

**विदूषकः**—(क) भो एदस्सिं विवादे तुह मए दिण्णो जओ । अण्णं किं पि रहस्सं पुच्छिस्सं । तदाणिं तिस्से पहासूई-हि णिरवसेसं दुक्खअं मे अक्खिजुअळं । तदो मए ण सा दिट्ठा । केरिसो तत्तहोदीए रूवादिसओ ।

**धनञ्जयः**—(निःश्वस्य) सखे ! मन्ये ममापि वाचस्तद्रूपातिशयवर्णनास्वपर्याप्तनैपुणाः । एतावत् तु कथयामि—

सौन्दर्यं सुकुमारता मधुरता कान्तिर्मनोहारिता
श्रीमत्ता महिमेति सर्गविभवान् निश्शेषनारीगुणान् ।
एतस्यामुपयुज्य[2] दुर्विधतया दीनः परामात्मभूः
स्रष्टुं वाञ्छति चेत् करोतु पुनरप्यत्रैव भिक्षाटनम् ॥ १५ ॥

(क) भो एतस्मिन् विवादे तव मया दत्तो जयः । अन्यत् किमपि रहस्यं प्रक्ष्यामि । तदानीं तस्याः प्रभासूचीभिर्निरवशेषं दुःक्षतं मेऽक्षियुगलम् । ततो मया न सा दृष्टा । कीदृशस्तत्रभवत्या रूपातिशयः ।

उक्तप्रकारेण तस्या नायकस्य रतिस्फुरणमालक्ष्य तत्परिपोषबुभुत्सया कीदृशो रूपातिशय इति प्रश्नः ॥

नायिकागुणवर्णनानुगुणं[3] प्रश्नवचनं समान्य चिन्तानुभावरूपं निःश्वासमवलम्ब्य सखे ! इति विस्रम्भानुगुणं सम्बोधनम् । सखे ! मदवस्थासर्वस्ववेदी त्वम् । अतः किं न कथयामि । ममापि साधु दृष्टवतोऽपि । अपर्याप्तनैपुणाः रूपातिशयस्य समृद्धौ निरूप्यमाणायामन्तरा वाचा दारिद्र्यमेव भवेत् । तर्हि मत्सब्रह्मचारित्वमेव भवत इति चेत्, तत्र । एतावत् परिमितमुत्तरं समष्टिरूपं सङ्गृह्य कथयामि । व्याप्तिरत्र यथामति निरूप्यतामिति भावः । सौन्दर्यमित्यादि ।

१ 'उ' ख. पाठः २ 'क' ख पाठः ३. 'न तत्र' ख पाठः

"अन्यूनानतिरिक्तं यदङ्गप्रत्यङ्गसौष्ठवम् ।
सुश्लिष्टसन्धिबन्धं च तत् सौन्दर्यमिति स्मृतम् ॥
अङ्गं शिरः कटी वक्षः कुक्षिः पादाविति स्मृतम् ।
उपाङ्गं नासिकानेत्रभ्रूकपोलाधरादिकम् ॥
जङ्घोरुबाहुग्रीवादि प्रत्यङ्गमिति कथ्यते ॥"

एवलक्षितमकृत्रिमसर्वाङ्गसौष्ठवरूपं सौन्दर्यम् । पुनः सुकुमारता अङ्गमार्दवम् ।

"व्यायामेनाधिभिर्वापि मृणालवदुपाश्नुते ।
ग्लानिं यदधिकां वस्तु सुकुमारं तदुच्यते ॥"

इति दिवाकरः ।

"प्रसूनपल्लवस्पर्शासहं यत् स्यात् तदुत्तमम् ।
पाणिस्पर्शावसहनं सौकुमार्यं तु मध्यमम् ॥
शीतातपाद्यसहनं सौकुमार्याधमं भवेत् ॥"

इति भेदश्च भावप्रकाशकारेणोक्तः । तादृशी सुकुमारता । पुनर्मधुरता

"माधुर्यं चेष्टितालापस्पर्शानां स्पृहणीयता ।"

इति लक्षिता । पुनः कान्तिः

"रूपोपभोगतारुण्यैर्योऽलङ्कारोऽङ्गसंश्रयः ।
सा शोभा सैव कान्तिः स्यान्मन्मथाप्यायितच्छविः ॥

इत्येवं लक्षिता । पुनर्मनोहारिता

"यस्मिन् सक्तं मनः पुंसां नान्येन ह्रियते पुनः ।
अन्येभ्यो यच्च हरति तन्मनोहरमुच्यते ॥"

इति लक्षिता । पुनः श्रीमत्ता

"यत्रोपादेयताबुद्धिः श्रीमत्ता सा प्रकीर्तिता ।"

इति लक्षिता । पुनर्महिमा

"मान्यत्व गौरवोपेतं महिमा समुदाहृतः ।"

इतिशब्द आद्यर्थे । तेन विलासादयः सङ्गृहीताः । सर्गविभवान् सर्गसम्पत्साधनभूतान् निश्शेषनारीगुणान् निश्शेषान् साकल्येन सङ्गृहीतान् नारीगुणान्[2] नारीसृष्टियोग्यान् गुणान् । एतस्यां प्रस्तुतायाम् । एकस्यामिति पाठे व्यक्त्यन्तरमपे-[3]

---

१. "अन्यासार करणाग न भिद्यते यत्र जायते । अलङ्करणमप्तानां तन्माधुर्यमिति स्मृतम् ॥" इति ग पाठः. २ 'इति च' ग. पाठ. ३. 'मन्ये' ग. पाठ.

विदूषकः—(सविषादं स्वगतम्) (क) सव्वहा सिविणे[1] वि मम णत्थि इन्दप्पत्थप्पवेसो, जेण जदाकदाइ दिट्ठं वा सुदं वा इत्थिअं कामेदुं एसो पवुत्तो। इत्थिआमई द्वुवारवई

(क) सर्वथा स्वप्नेऽपि मम नास्तीन्द्रप्रस्थप्रवेशः, येन यदाकदाचिद् दृष्टां वा श्रुतां वा स्त्रियं कामयितुमेष प्रवृत्तः। स्त्रीमयी द्वारवतीति श्रूयते।

क्ष्यैकव्यक्तावेवेति प्रकृतायामित्यर्थात् सिध्यति। उपयुज्य, नतु विन्यस्य, विषयस्य समस्तगुणभरसहिष्णुतया परस्पराविरोधेन सर्वान् सोपयोगं संस्थाप्येत्यर्थः। तेन कृतार्थता व्यज्यते। अत एव(म्?) अन्यस्त्रीसर्गनिरपेक्ष इति वाक्यविश्रान्तिरर्थात् सिध्यति, अन्यथा उपयुज्य परां स्रष्टुं वाञ्छति चेदिति सृष्टिवाञ्छाया उत्तरकालक्रियात्वं न घटते। न खलु 'स्नात्वा भुङ्क्ते' इतिवत् सृष्टिवाञ्छाशेषत्वेनोपयोगः। अत उपयुक्तवानिति युक्तम्। उपयुज्य दुर्विधतया दीन इति सम्बन्धेऽप्युपयोगस्य खेदावहत्वं भवेत्, तच्च न चतुरश्रमित्येव व्याख्यायते। उचितस्थानविनियोगेन कृतार्थोऽप्यात्मनः स्रष्टृत्वात् परामेवंप्रायगुणविशिष्टा,नतु व्यक्तिमात्रम्। स्रष्टुं वाञ्छति चेद्, अवाञ्छैवास्य गौरवानुगुणा, तथापि वाञ्छति चेत्। दुर्विधतया दीनः विधा प्रकारः, असमीक्ष्यकारिताकृतेन कृच्छ्रेण गुणदरिद्रताप्रकारेण दीनः निरस्तगर्वः। पुनरपीति पूर्वं गुणविनियोगे सोद्यमः स्वयमेव गुणानपेक्षमाण इत्यर्थः। अत्रैव अस्यामेव। गुणसर्वस्वस्यात्रैव सफलीकरणान्नान्यतो लभ्यत्वम्। तर्हि स्वोत्पत्तिनिमित्तात् सम्पादयितु शक्यम्। तत्र। आत्मभूः निमित्तादिकारणनिरपेक्षं स्वयंप्रकाशः। गुणानां पुनः सृष्टावपि सृष्टेरव्यवस्था भवेत्। अतो याचनमेव शरणम्। तच्च नान्यत्र घटत इत्यवधारणम्। भिक्षाटनं करोतु भिक्षार्थमटनं करोतु 'भवति मह्यं गुणभिक्षां देही'ति। अटनमित्यनेन फलोदयस्यैतत्कारुण्याधीनत्वाद् यावत्साध्यलाभमेकवारमनेकवारं वा पर्यटन करोतु, फल सेत्स्यति वा न वेति प्रकाश्यते। सकलवनितागुणरत्नानामियमेवाकर इत्येतावत् तु कथयामीति मयोक्तम्। अत्रायोगविप्रलम्भस्याभिलाषचिन्तास्मृतिगुणकथारूपावस्था रतिपरिपोषानुगुण प्रकाश्यन्ते[4]॥ १९॥

१. 'णे म' क. पाठः. २ 'ई मु' ख. पाठः ३ 'त्स्यामेवेति' ख. पाठः. ४. 'त्वादप' क. पाठः.

त्ति सुणीअदि। तं पविट्ठो ण आणामि केरिसे उम्मादे पडिस्सदि त्ति। ता एव्वं उवाळम्भिस्सं। (प्रकाशम्) भो वअस्स! किञ्चि मए पुच्छिदो किं अकुविदो कहेदि अत्तभवं।

धनञ्जयः— ननु प्रभवति भवानस्मदनुबन्धेषु व्यापारेषु। विस्रब्धं पृच्छयताम्।

विदूषकः—(क) तत्तहोदीए पञ्चाळीए वुत्तन्तो पाहेअसङ्गहो विअ मग्गे उवभुञ्जिअ खअं णीदो। पुणो को वि सुभद्दासद्दो तुमं विहुरेदुं आढत्तो। सो वि इमाए आआसइत्थिआए उवमद्दिओ। कुदो दे उवणदा अपुव्वा इअं ळोळदा।

धनञ्जयः—सखे! अपरमार्थवेदिना भवतैवमभिहितं, यतो मम हृदयमशक्यमन्याभिः पार्षतीकटाक्षशृङ्खलासङ्घटितं विघटयितुम्। अन्ययोः पुनः कन्यकयोरस्मच्चेतोवृत्तेर्याथातथ्यं कथयामि।

ता प्रविष्टो न जानामि कीदृश उन्मादे पतिष्यतीति। तदेवमुपालप्स्ये। भो वयस्य! किञ्चिन्मया पृष्टः किमकुपितः कथयत्यत्रभवान्।

(क) तत्रभवत्याः पाञ्चाल्या वृत्तान्तः पाथेयसङ्ग्रह इव मार्गे उपभुज्य क्षयं नीतः। पुनः कोऽपि सुभद्राशब्दस्त्वा विधुरयितुमारब्धः। सोऽप्यनयाकाशस्त्रियोपमर्दितः। कुतस्ते उपनतापूर्वेयं लोलता।

अपरमार्थवेदिनेति। पाञ्चालीपक्षपातः सुभद्रानुरागेण निहतः, सोऽप्याकाशस्त्रियेति वस्तुतत्त्वापरिज्ञानेनोक्तम्। तिसृष्वपि प्रकारभेदेन मनोवृत्तिरित्याह।

१ 'स्सं' ण। (प्र' क पाठः. २. 'दु' क पाठ.

एकस्याः किमपि वपुः श्रुतेन नाम्ना
सङ्कल्पैर्लिखितममुत्र चित्तभित्तौ।
अन्यस्याश्चरितफले दृशौ शरीरे
प्रेयस्योः पृथुलदृशोरियं दशा मे॥ १६॥

(सचिन्तस्तिष्ठति)

विदूषकः — (क) भो वअस्स! एदं कहेहि। अहो ण किञ्चि एदेण सुदं। किं पसुत्तो अत्तभवं, जेण मए पुच्छिअमाणं ण सुणीअदि।

धनञ्जयः — सत्यं, व्याक्षिप्तं मे मनः। (आत्मानं निर्दिश्य) सखे! सम्प्रत्यपि पश्य —

श्रमजलभिन्नं गात्रं रोहद्रोमाञ्चकञ्चुकच्छन्नम्।
तस्याः खलु मे पाणी नमयत इव ते स्तनश्रोण्यौ॥ १७॥

(क) भो वयस्य! एतत् कथय। अहो न किञ्चिदेतेन श्रुतम्। किं प्रसुप्तोऽत्रभवान्, येन मया पृच्छयमानं न श्रूयते।

सङ्घटितं सम्बद्धं, निगलितमिति यावत्। किमपि वपुरिति अनिश्चितस्वरूपमनिर्देश्यं च। श्रुतेन नाम्ना हेतुना। सङ्कल्पैः नामश्रवणानुसारेण संज्ञिस्वरूपसङ्कल्पनम्। लिखितमित्यनेन सन्ततानुसन्धानं प्रकाश्यते। चरितफले दृशावित्यनेन दर्शननिमित्तत्वं रतेः प्रकाशितम्। प्रेयस्योरित्यनेन प्रकारभेदेऽपि प्रेयसीत्वं सममेव। पृथुलदृशोरिति वस्तुसौन्दर्यमेवात्र मनोवृत्तेर्हेतुरिति प्रकाशितम्॥ १६॥

श्रमजलेत्यादि। तस्यास्ते स्तनश्रोण्यौ सम्प्रत्यपि मे पाणी नमयत इवेत्यन्वयः। ते पतनदशायामनुभूतगौरवे। तदानीन्तनप्रत्ययाविच्छेदाद् देहसम्बन्धविश्लेषेऽपि स्वगौरवेण मे पाणी नमयत इव। पश्येति मध्ये कथनं मदुक्तिं विना त्वयो ज्ञातुं शक्यो व्याक्षेप इति प्रकाशयितुम्। गात्रस्य श्रमजलभिन्नत्वेन रोमाञ्चस्य कञ्चुकत्वारोपेण च सर्वाङ्गीणत्वं प्रकाशितम्। तेन तन्निमित्तभूताया रतेरुत्कर्षः प्रकाशितः॥ १७॥

१. 'रिति प्र' ख. पाठः. २. 'ण पा' क. पाठः. ३. 'यापि ज्ञा' ख. पाठः.

(पुनर्विचिन्त्य) किं पुनः पूर्वं प्रष्टुमुपक्रान्तमत्रभवता ।

विदूषकः— (क) तं मए विसुमरिअं। अआळन्तरक्खमा एदस्स पज्ञत्ति जाणन्तो वि तुवं तदाणिं असुणिअ एह्लिं पुण पुच्छन्तो जळलिहिदाइ अक्खराइ काळन्तरे वाइदुं उवक्कमसि ।

धनञ्जयः—अलमेभिरसत्प्रलापैः। तत्सङ्गमोपाय एव तावच्चिन्त्यताम् ।

विदूषकः— (स्वगतम्) (ख) एदस्स आआसवासस्स ण अवसरं दइस्सं। एव्वं दाव भणिस्सं। (प्रकाशम्) भो वअस्स! ण दाव सा किण्णामहेआ, केरिसगोत्ता, कुदो आअदा, कहिं वा गदत्ति जाणीअदि । केवळं अदिट्ठमूळेण भमेण पय्याउळो होसि। का णाम एत्थ उवाअचिन्ता।

धनञ्जयः—सखे! सत्यमीदृशमेवैतत्। अमुष्याः प्राप्तौ दैवमेव प्रमाणम्। तदधुना वासुभद्रभगिनीप्राप्तये पुरीमिमामनुप्रविशावः।

---

(क) तन्मया विस्मृतम्। अकालान्तरक्षमैतस्य प्रज्ञेति जानन्नपि त्वं तदानीमश्रुत्वेदानीं पुनः पृच्छन् जललिखितान्यक्षराणि कालान्तरे वाचयितुमुपक्रमसे।

(ख) एतस्याकाशवासस्य नावसरं दास्यामि। एवं तावद् भणिष्यामि। भो वयस्य! न तावत् सा किन्नामधेया, कीदृशगोत्रा, कुत आगता, क्व वा गतेति ज्ञायते। केवलमदृष्टमूलेन भ्रमेण पर्याकुलो भवसि। का नामात्रोपायचिन्ता।

---

आकाशवासस्य निरालम्बनस्य चित्तव्याक्षेपस्यावसरं न दास्यामि। दोषकथनेन निरस्यामीति शेषः। अदृष्टमूलेन भ्रमेण निरधिष्ठानेन, सर्पभ्रमे रज्जुरधिष्ठानमस्ति, इह वनिताभ्रमे किमपि न मूलं दृश्यते। अतस्तव पर्याकुलत्वं न शोभते। त्वया ननु"उदकमयानभिमन्यसे मरीचीनि"(अङ्क. १-श्लो. १०)ति मम भ्रमो निरस्तः। तत्र मरीचिषु भ्रमोदकभ्रम इति त्वयैवोक्तम्। इह तादृशमधिष्ठानं न दृश्यते। तत् तूष्णीमास्स्वेत्यर्थः॥

एवमस्य निषेधे दैवमेवात्र शरणमिति पुनरपि रतिं स्थिरीकृत्य एकस्यामेव द्विशाखतया सङ्कल्पेनालङ्घनीयमनुरागमवलम्बमानः पुरीप्रवेशे त्वरते॥

**विदूषकः**— (क) भो वअस्स ! तहिं पविट्ठेहिं अह्मेहिं सा वि सुभद्दा कहं आसादिज्जइ । किं पुण पच्चक्खं एव्व गदुअ कुमारीभिक्खं याचह्म, आदु अद्धरत्ते उद्धूणा होदूण चोरह्म ।

**धनञ्जयः**— (सस्मितम्) अतिकृपणोऽयमत्रभवता दर्शितो मार्गः। अहं पुनः सुहृदो वासुदेवादवाप्तानुमतिः प्रमथ्य वृष्णीन् प्रसह्य प्रेयसीं हरिष्यामि । तन्मस्करिवेषधारी तु कालं प्रतीक्षिष्ये । भवता च वर्णिव्यञ्जनेन कर्मण्यस्मिन्नवहितेन भवितव्यम् ।

**विदूषकः**—(स्वगतम्) (ख) सव्वहा समरपरिणामो अअं आरम्भो संवुत्तो । (प्रकाशम्) भो वअस्स ! सव्वंकसा एसा णीदी, जं एत्तिअमत्तो अह्माअं संबन्धिवग्गो, एदं पि जादवउलं सअं एव्व सत्तुणो सुयोधणस्स देसि[2] त्ति तक्केमि ।

---

(क) भो वयस्य! तत्र प्रविष्टैरस्माभिः सापि सुभद्रा कथमासाद्यते। किं पुनः प्रत्यक्षमेव गत्वा कुमारीभिक्षां याचावहे, अथवार्धरात्रे चोरौ भूत्वा चोरयावः ।

(ख) सर्वथा समरपरिणामोऽयमारम्भः संवृत्तः । भो वयस्य! सर्वङ्कषैषा नीतिः, यदेतावन्मात्रोऽस्माकं सम्बन्धिवर्गः, एतदपि यादवकुलं स्वयमेव शत्रवे सुयोधनाय ददासीति तर्कयामि ।

---

उद्धूणा होदूण चोरौ भूत्वा । उद्धूणा इति देशीयपदम् ॥

**मस्करिवेषधारी** । मस्करी परिव्राजकः "मस्करमस्करिणौ वेणुपरिव्राजकयोः" (६-१-१५४.) इति निपातः। वर्णिव्यञ्जनेन ब्रह्मचारिचिह्नेन "*वर्णाद् ब्रह्मचारिणि" (५-२-१३४.) इति निपातनम् । विषयमार्गवैदेशिकत्वेनान्यथाप्रतीतिपरिहाराय मस्करिवेषग्रहणम् । तदनुसरणाय ब्रह्मचारित्वमपि ॥

१. 'ण अ सं' क. पाठः २. 'दि' क. पाठः. ३. 'र्णा ब्र' ख. पाठः

* वर्णी ब्रह्मचारिणीति सूत्रपाठ मन्यमानस्य व्याख्यातुर्निपातनत्ववर्णनं घटते ।

**धनञ्जयः**—मदधीनसकलजन्मफले सति चराचरगुरावपरे सङ्गच्छन्तां सात्त्वताः सुयोधनेन ।

**विदूषकः**—(क) जं होइ तं होदु । सव्वहा तुमं अणुसरेदुं एसो ह्मि बद्धपरिअरो । जाव अस्समं गदुअ अह्माअं वेसोवअरणाणि आणइस्सं । (परिक्रामति)

**धनञ्जयः**— (विचिन्त्य) कष्टं भोः कष्टम्—

भ्राता धर्मसुतस्य भीमसहजो भीष्मस्य नप्ता स्वयं
बीभत्सुर्यमयोर्गुरुः सुरपतेः सूनुः सखा शार्ङ्गिणः ।

---

(क) यद् भवति तद् भवतु । सर्वथा त्वामनुसर्तुमेषोऽस्मि बद्धपरिकरः । यावदाश्रमं गत्वावयोर्वेषोपकरणान्यानेष्यामि ।

---

एवं सङ्कल्पपरम्परया क्रमपरिपोषं गतां रतिमवलम्बमानः परिव्राजकवेषपरिग्रहे कृताध्यवसायोऽपि मध्ये व्यभिचारितया तत्त्वदृष्टिरूपां मतिमवलम्बमानोऽनुचितप्रवृत्तौ सानुताप आह—कष्टमित्यादि । कष्टं कृच्छ्ररूपम् । भो इति चिन्तासन्तापयोः । आरब्धस्य प्रवृत्तौ निवृत्तौ च कृच्छ्रत्वमिति पुनः कष्टग्रहणम् । निवृत्तिरशक्येति मत्वा प्रवृत्तौ दोषान् विमृशति—भ्रातेत्यादि । अत्र मदनस्य मनन निरूप्यते । अथ मम किङ्करो भूत्वा प्रणयिनीहेतोः प्रव्रज्यां प्रतिपन्नः । कोऽत्र दोष इति चेदाह—धर्मसुतस्य भ्राता धर्मसुत धर्मसर्वस्वधुरन्धरः । प्रव्रजन कुलधर्मविरुद्धं—

"मुखजानामयं धर्मो यद्विष्णोर्लिङ्गधारणम् ।
वाहुजातोरुजातानामयं धर्मो न विद्यते ॥"

इति । विहिताकरणमेव कुलीनस्य न शोभते, किं पुनर्निषिद्धाचरण, ततोऽपि धर्मनियामकस्य भ्रातुस्तन्न युक्तमिदमिति प्रथमं न निरूपितवान् । पुनर्भीमसहज इति वलवत्साध्ये कर्मणि वलवदग्रेसरे भ्रातरि तिष्ठति चौर्यं न शौर्यावहमिति न निरूपितवान् । पुनर्भीष्मस्य नप्ता अष्टाङ्गब्रह्मचर्ययुक्तस्योर्ध्वरेतसो नप्तेत्यनौचित्येन विषयवीथीपरिभ्रमणे तत्सम्बन्धमपि न निरूपितवान् । पुनः स्वयं बीभत्सुः स्वय-

---

१ 'दद ध' क. पाठः.

भूत्वायं मम किङ्करः प्रणयिनीहेतोः पृथानन्दनः
प्रव्रज्यां प्रतिपन्न इत्युपगतो मन्ये स्मरः स्मेरताम् ॥ १८ ॥

विदूषकः—(सभय परावृत्य) (क) भो वअस्स ! परित्ताआहि परित्ताआहि । एसो को वि अपुव्वो महाणाओ भोअमज्झगएण समुम्मिसन्तमहामणिमरीइजाळेण फणविरथारेण अदिभीसणो मं भस्सीकादुं पवुत्तो ।

(क) भो वयस्य! परित्रायस्व परित्रायस्व । एष कोऽप्यपूर्वो महानागो भोगमध्यगतेन समुन्मिषन्महामणिमरीचिजालेन फणविस्तारेणातिभीषणो मा भस्मीकर्तुं प्रवृत्तः ।

मेनानुचितेभ्यो बीभत्सत इति गुणरूढ नामापि डित्थादितुल्य कृतवान् । पुनर्यमयोर्गुरुः आत्मानुष्ठानेन हितोपदेशेन चाज्ञाननिवारक, तादृशमधिकारमपि न निरूपितवान् । एते सर्वे मानुपास्तिष्ठन्तु, सुरपते सूनु , न सुरमात्मन्यात्मन आमुष्यायणत्वम्, आत्मदर्शिनयां लोकनाथ पितरमपि स्पृशेदिति च न निरूपितवान् । पुन शार्ङ्गिण सखा, श्रीनारायणस्य दास्यमपि दुर्लभ, किं पुनः सख्यम्, अतस्तद्विरुद्धाचरणे तत्काम्यशैथिल्यमपि न निरूपितवान् । पुनः पृथानन्दनः प्रथम भर्तृशुश्रूषणैकपराया. पश्चात् पुत्राणा गुणाधानधुर-धराया. पृथाया नन्दन', पार्थत्वे त्रयाणामपि तुल्ये पार्थ इति धनञ्जये प्रथम प्रतीतिस्तन्मातृवात्सल्यातिशयेन । तस्यापि न युक्तोऽय मार्ग इति न निरूपितवान् । एवं मातृपितृपितामहभ्रातृसुहृत्सम्बन्धमनादृत्य मम भुवनजेतु किङ्करः यथोक्तचारी, उचितानुचितविचार निरस्य प्रणयिनीहेतो प्रव्रज्या प्रतिपन्न (प्रव्रज्यां ?) प्रणयिनीमन्तर्निधाय प्रव्रज्यां नटवत् परिव्राजकवेष प्रतिपन्न अध्यवसितवान् । मत्कैङ्कर्यप्राबल्येन न विचिकित्सति । अत्र हेतुहेतुमतोरतीव वैसादृश्यमिति परिहासास्पदत्वम् । यदि प्रणयिनीहेतोर्वेषान्तरपरिग्रहस्तर्हि साध्यगौरवेण घटताम् । तत्रापि प्रणयिनीहेतोनिरतिशयप्रेमविशिष्टयुवतिपरिभोगार्थम् । धर्मार्थं परिणयनादिकमपेक्ष्यानन्यसाध्य तया तद्विरुद्धवेषपरिग्रहो निरूपणे नानुचित । इद पुनरत्यन्तमनुचितम् । इतीति मननप्रकारोपसंहार. । इति मत्वेति शेष. । स्मेरतामुपगत स्मयो गर्व , तत्परतां, परिहासपरता वोपगत इत्यहं मन्ये ॥ १८ ॥

धनञ्जयः--- को नु खल्वेनं व्यामोहयति। (उपसृत्य पश्यन्) मूर्ख! मा भैषीः। काचिदियं प्रवरमणिप्रलुप्तमध्यमण्डला जाम्बूनदमयी गात्रिका। मन्ये तस्या एव कन्यकायाः प्रमथप्रक्षोभे प्रच्युतयानया भवितव्यम्। (सादरमादाय हृदये निक्षिपन्) अयि प्रक्षीणपुण्यसञ्चये!----

ध्रुवमनुभववार्त्ता विद्धि नातः परं ते
कुचसरसिजयोर्यत् कुङ्कुमाकल्पधाम्नोः।
अलमयमवकाशो मण्डले यौवनेन
क्षणसुलभमहिम्नोर्गात्रिके! नात्र तस्याः॥ १९॥

विदूषकः---(सावधान निरूप्य) (क) अदिभीरुएण वि मए एत्थ को वि उवलक्खिओ विसेसो। सिप्पन्तरे[1]सु एसा अक्खरपन्ती दीसइ।

धनञ्जयः---(निरूप्य सहर्षम्) अये मदीयानि दशनामधेयान्यत्रोत्कीर्णानि। सोऽयमुभयप्रार्थनारमणीयो मदनव्यापारः।

---

(क) अतिभीरुणापि मयात्र कोऽप्युपलक्षितो विशेष.। शिल्पान्तरेष्वेपाक्षरपङ्क्तिर्दृश्यते।

---

एव मध्ये तत्त्वदृष्टिमवलम्बमानोऽपि रतिप्रवाहेणोह्यमानः प्रस्तुत एव प्रवर्तते---ध्रुवमिति। अत पर तवानुभववार्ता न, अनुभवस्य प्रसङ्गोऽपि। गात्रिकात्वेन तत्कुचकलशसंश्लेषकृत एव तवानुभव, अत पर तस्य न सिद्धि.। तस्या अत्र अम्महृद्ध्युपारूढे कुचसरसिजयोर्मण्डले तवायमवकाश. पूर्वसन्निवेशोचितप्रमाण इदानीं न पर्याप्त, यतो यौवनेन क्षणसुलभमहिम्नोः प्रतिक्षणमयत्नसिद्धपरिणाहोन्नाहयो। कुङ्कुमाकल्पधाम्नो कुङ्कुमाकल्पस्य निरन्तरसम्बन्धोचितयो। कुङ्कुमाकल्पेन धाम ययोरिति न चतुरश्र, स्वत एव शोभनत्वात्॥ १९॥

---

१ 'रेए' क पठ.

कदाचिदमुष्यापि स्त्रीरत्नस्येदमेव द्वारकापुरमाकरः स्यात्। तदुभयप्राप्तये प्रयतिष्यावहे । स्वीक्रियतामियं[1] गात्रिका । (विदूषकस्य हस्ते समर्पयति)

**विदूषकः**—(क) एव्वं होदु । (ऊर्ध्वमवलोक्य) भो वअस्स! पेक्ख पेक्ख । एसो दुल्लङ्घणभोमग्गळङ्घणदुब्बळपादसञ्चारो अहं विअ पिपासिओ ळवणजळहिजळं उवसप्पइ भअवं सहस्सरस्सी ।

**धनञ्जयः**—(विलोक्य) अये अस्तमितो भगवानंशुमाली । तथाहि—

अपरगिरिनिषण्णं वासरं वासरश्री-
रभिमतमभिसर्तुं प्राणनाथं प्रदोषे ।

---

(क) एव भवतु । भो वयस्य! पश्य पश्य । एष दुर्लङ्घनभोमार्गलङ्घनदुर्बलपादसञ्चारोऽहमिव पिपासितो लवणजलधिजलमुपसर्पति भगवान् सहस्ररश्मिः ।

---

एवमेकदिवसप्रयोज्येतिवृत्तनटनेनाङ्कसमाप्तये सन्ध्यां प्रकाशयति—**एष** इत्यादिना । अहमिव पिपासितः । मार्गलङ्घनदुर्बलपादसञ्चारत्वं मम सिद्धम् । असावपि दुर्लङ्घनभोमार्गलङ्घनेन प्रशान्तप्रतापरश्मिप्रसरः । पिपासितस्य मम यथा मृगतृष्णिकोदकप्रसरो न तृष्णाहरः, तथास्यापि लवणजलधिप्राप्तिः, अनास्वाद्यत्वात् । अतो मत्सब्रह्मचार्येवायम् ॥

एवमुपवर्णितमस्तमेवानुसन्धाय भोगेच्छावसानानुगुण सन्ध्यां वर्णयति[2] । **अपरगिरिः** अस्ताचलो मन्दिरस्थानीयः, तत्र निषण्णं प्रागेव प्राप्य स्वसङ्गमापेक्षया स्थितं वासरं प्राणनाथं वासरश्रीर्नायिका अभिमतमभिसर्तुं स्वेच्छानुरूपं प्राप्तुम् अन्धकारांशुकेन स्वतनुं स्वरूपं संवृणोतीव आच्छादयतीव । अतनुरागा

---

१. 'यम् । (गात्रिका वि' क. पाठः २ 'ति अपरगिरीत्यादि । अप' ख. पाठ..

स्वतनुमतनुरागा* संवृणोतीव साक्षा-
दसितजलदनीलेनान्धकारांशुकेन ॥ २० ॥

तदाश्रमं प्रविश्य प्रस्तुतसिद्धये व्याप्रियावहे ।

(इति निष्क्रान्तौ)

इति प्रथमोऽङ्कः ।

---

अनल्पसन्ध्यारुणत्वरूपानुरागा । साक्षादिति तनुविशेषणम् । साक्षाद्भूतां सर्वदृश्याम् । अत एव संवरणयोग्यत्वम् । अन्धकारावृतस्य तेजोंशसम्बन्धेन शाबल्यं परिहर्तुमसितजलदनीलेनेत्युक्तम् । अतिनीलेनैवेत्यर्थः । प्रदोष इत्यभिसरणकालौचित्यं प्रकाशितम् । अत्र वासरस्य प्राणनाथत्वेन सन्ध्यारागस्य श्लिष्टतयानुरागत्वेनान्धकारस्याशुकत्वेन च शाब्द आरोपः, वासरश्रियो दिनशोभावाचकत्वेन नायिकात्वारोप आर्थः, इत्येकदेशविवर्तिरूपकम् ॥ २० ॥ एवमङ्कावसाने पनिरमायनानुसन्धानेन नायकस्य निष्क्रान्तिः प्रतिपादिता ॥

इति विचारतिलकनाम्नि सुभद्राधनञ्जयव्याख्याने

प्रथमोऽङ्कः ।

---

* 'गान् स' इति मूलकोशयोः पाठः.

अथ द्वितीयोऽङ्कः ।

(ततः प्रविशति चेटी)

चेटी–(क) आणत्तह्मि भट्टिदारिआए सुभद्दाए—हञ्जे कप्पळदिए! तस्सिं भूदसम्मद्दे पभासतित्थपरिसरे पब्भट्ठा मे गत्तिआ। तं गवेसिअ आणेहि । अण्णं च, जेण अहं भूदहत्थादो मोआविदा, सो वि महाणुभाओ ळोअणाणन्दअरो तहिं सण्णिहिदो ण वेत्ति संपहारिअ आअच्छ त्ति । सुइरं च मए अण्णेसिअं । ण सा गत्तिआ, ण सो पुरिसो दिट्ठो। किं णु हु भट्टिदारिआए कहइस्सं । (विचिन्त्य) कुमारधणञ्जअस्स णामङ्किदत्ति गत्तिआअं से बहुमाणो ।

---

(क) आज्ञप्तास्मि भर्तृदारिकया सुभद्रया—सखि! कल्पलतिके! तस्मिन् भूतसम्मर्दे प्रभासतीर्थपरिसरे प्रभ्रष्टा मम गात्रिका । तां गवेषयित्वानय । अन्यच, येनाहं भूतहस्तान्मोचिता, सोऽपि महानुभावो लोचनानन्दकरस्तत्र सन्निहितो न वेति सम्प्रधार्यागच्छ इति । सुचिरं च मयान्वेषितं । न सा गात्रिका, न स पुरुषो दृष्टः । किं नु खलु भर्तृदारिकायै कथयिष्यामि । कुमारधनञ्जयस्य नामाङ्कितेति गात्रिकायामस्या बहुमानः । अन्योऽप्यन्विष्यते पुरुष इति कि-

---

अथ द्वितीयाङ्के नायकस्य यतिवेषेण काञ्चनोद्यानप्रवेशं, रामकृष्णयोर्दर्शनोद्यमं, नायिकायाः प्रमथाहरणवृत्तान्तं, नायके पुरुषान्तरबुद्धिं, तदन्वेषणोद्यमं च वृत्तवर्तिष्यमाणकथाङ्गं सूचयितुं नीचमध्यमपात्राभ्यां मिश्रविष्कम्भः प्रकाश्यते । प्रविष्टा चेटी विफलप्रयासाप्यात्मन आज्ञालाभपात्रतां विचिन्त्य प्रसन्नाह—आज्ञप्तास्मि भर्तृदारिकया सुभद्रयेत्यादि । परिवारबहुत्वेऽप्यहमेव रहस्यनियो-

---

१. 'योस्तद्दर्श' ख. पाठः

अण्णो वि अण्णेसि॑ज्जइ पुरुसत्ति किं विअ एदं । अ-ण्णं च, मए कुदो तस्सिं पमहवुत्तन्ते परमत्थो जाणिदव्वो । (नेपथ्याभिमुखमवलोक्य) एसो अय्यविणअपाळिदो इदो एव्व आअच्छइ । एव्वं दाव पुच्छिस्सं ।

(तत प्रविशति काञ्चुकीय )

काञ्चुकीयः--आदिष्टोऽस्मि देवेन देवकीनन्दनेन, यथा--विनयपालित! विविक्ते किल रैवतकप्रस्थवर्तिनि काञ्चनोद्याने

---

मित्येतत् । अन्यच्च, मया कुतस्तस्मिन् प्रमथवृत्तान्ते परमार्थो ज्ञातव्य । एप आर्यविनयपालित इत एवाग च्छति । एव तावत् प्रक्ष्यामि ।

---

गपात्रमिति प्रहर्प , भर्तृदारिकयेति वहुमान , सुभद्रयेति वात्सल्यातिशयश्च प्रकाशित । हञ्जे[१] कल्पलतिके इत्यादि । समीपे नामपूर्व मामाहूयैवमुक्तवतीति तन्नियोगानुवादद्वारा सूच्यसूचनम् । प्रभासतीर्थपरिसर इति गात्रिकाया पुरुपस्य चैकत्रैवान्वेषणसौकर्य प्रकाशितम । गवेपयित्वानयेत्यानयननिर्वन्ध । तेन गात्रिकानयनमत्र मुख्यमित्यन्यस्य गोपन सूचितम् । महानुभावो लोचनानन्दकर इति अधृप्यत्वेनाभिगम्यत्वेन भूतहस्तान्मोचितेत्यनुकम्पया च पुरुपस्यान्वेषणयोग्यत्व प्रकाशितम् । एव तदाज्ञामनूद्य प्रवृत्तिवैफल्य प्रकाशयति सुचिरमित्यादिना । अण्णेसिज्जइ अन्विप्यते । प्रमथवृत्तान्ते परमार्थ वस्तुस्वरूपम । तेन पुरुपस्यान्वेषणयोग्यत्व सिध्यति वेति तस्या अभिप्राय ॥

अथ कन्चुकिन प्रवेश । देवेन जगद्वृत्तान्तेन क्रीडता द्योतमानेन स्तोतव्यचरितेन । देवकीनन्दनेन जगदनुग्रहाय मानुपत्वमवलम्वमानेन । विविक्ते किलेत्यादि । किलेति लोकवार्तया श्रुतमिति सूचितम् । आगन्तुको भगवान् परमहस इति साक्षात्कारयोग्यत्वम् । आर्येण साक्षात्करणीय , मया साक, तद नुसारेण मयापीत्यर्थ । साक्षात्कारो दर्शनम् । तदुपलक्षण. वन्दननमस्कारादे ।

---

१ 'द' क पाठ  २ 'श । आदिष्टोऽस्मीत्यादि । द' ख पाठ

§ 'अइ' इति मूलकोशयो पाठ

कश्चिदागन्तुको भगवान् परमहंसः सन्निधत्ते । सोऽयमार्येण साकं सङ्कर्षणेन साक्षात्करणीयो मया । तत् सज्जीक्रियतां रथ इति । मया च तदार्यदारुकाय निवेदितम् । जरावक्तव्यचरणतया पुनरियत्यतिविलम्बना संवृत्ता । कुतः—

पातं जलत्वेन समाचरन्ती सदेति हासास्पदतामवाप्ता ।
मूर्त्तिः परामेत्य पुराणतां मे कथं न वाच्या परतन्त्रवृत्तिः॥ १ ॥

---

"दर्शनादेव साधव" इति युक्त्या साक्षात्कारस्य प्राधान्यमुक्तम् । आर्यदारुकायेति श्रीकृष्णसारथये। जरावक्तव्यचरणतया जरैव वक्तव्य वचनीयं यस्य तज्जरावक्तव्यं, तादृश चरणं यस्येति बहुव्रीहिः, चरण गमनं पादो वा । गमनवैषम्यहेतुत्वेन वक्तव्यस्य चरणविशेषणत्वमुक्तम् । इयतीति बुद्ध्युपारूढं कालदैर्घ्यं प्रकाशयति । अविलम्बितसाध्येऽतिविलम्बनं मदशक्तिदोषेणैव । कुत इत्यादि जरादोषसमर्थनोपक्रमः । जरादोषं समर्थयति---पातमित्यादिना । मूर्तिर्मे परां पुराणतामेत्य सदा जलत्वेन पातं समाचरन्तीति हासास्पदतामवाप्ता कथ न वाच्या । वाच्या वचनयोग्या अपवादयोग्येत्यर्थ. । पुराणता वय.परिणतिः, ततो जडता, तेन पातः, तेन हासास्पदत्वं, तेन वाच्यत्वमिति क्रम । तर्ह्यपवादपरिहारा(य इति साधि ! य साधु यति)तव्यम् इति चेत् तत्राह—परतन्त्रवृत्तिः, परतन्त्रा पराधीना वृत्तिर्जीवनसाधनं वसनाशनादि यस्याः । अतोऽशक्तावपि यावज्जीवं नियोगानुष्ठानमेव शरणमिति जरावैराग्येणोक्तिः । केचिद् हासास्पदतामवाप्तेति वाक्यं समाप्य कथं न वाच्या परतन्त्रवृत्तिरिति समर्थकत्वेन परतन्त्रवृत्तेः सामान्येनापवादविषयत्व वदन्ति । अत्र पातञ्जलमिति, इतिहासशब्दयोरेकीकरणेनेतिहासमिति,पुराणमिति, तन्त्रमिति, वृत्तिरिति च वाच्येति वचनयोग्येत्येवमत्र विन्यासभङ्गिः रचनावैचित्र्यमेव, न प्रकृतोपयोगिनी कामप्यर्थसिद्धिं प्रकाशयति ।

---

१. 'ण सा' क. पाठः. २. 'या । स' क. पाठ. ३. 'इति ज' ख. पाठः. ४. 'मः पा' ख. पाठः. ५. 'त्रिर' क. पाठः. ६. 'रिर्यति प्र' ख पाठः.

**चेटी**—(उपसृत्य) (क) अय्य! कुदो मं अणवेक्खिअ गच्छसि।

**काञ्चुकीयः**—(सावधानं निर्वर्ण्य[2]) कच्चित् कल्पलतिका भवती।

**चेटी**—(ख) अय्य! तह। अय्यादो किञ्चि जाणिदुं इच्छामि। को तस्सिं पमहवुत्तन्ते परमत्थो।

**काञ्चुकीयः**[3]—वत्से! अतीतायां खलु रजन्यामाननारविन्दवर्त्तिनीमाकस्मिकीं स्मितचन्द्रिकामवलोक्य निमित्तपरीप्सया देव्या सत्यभामया पर्याप्तपर्यनुयुक्तस्य भगवतः[4] श्रीमुखाम्भोजादेतावदवगतमस्माभिः, यथा—बलभद्रानुमतिलेशोपलम्भाद् भर्तृदारिकायां सुभद्रायां सञ्जाताभिलाषस्य

(क) आर्य! कुतो मामनवेक्ष्य गच्छसि।

(ख) आर्य! तथा। आर्यात् किञ्चिद् ज्ञातुमिच्छामि। कस्तस्मिन् प्रमथवृत्तान्ते परमार्थः।

---

"यैरेकरूपमखिलास्वपि वृत्तिषु त्वां
पश्यद्भिरव्ययमसङ्कुचतया प्रवृत्तम्।
लोपः कृतः किल परत्वजुषो विभक्ते-
स्तैर्लक्षणं तव कृतं ध्रुवमेव मन्ये॥"

इत्यत्राध्यात्मप्रक्रियायामव्ययलक्षणं स्फुरति। तथा च नात्र वैचित्र्यम्। अतोऽत्रार्थान्तरसम्बन्धकथनं प्रयास एव॥ १॥

अतीतायामित्यादि। आननारविन्दवर्तिनीं स्मितचन्द्रिकामिति। अरविन्दे स्मितचन्द्रिकासम्बन्धानुपपत्त्या अरविन्दसमानाननसम्बन्धिनीमित्युपमासिद्धिः। आकस्मिकीं निर्निमित्तामिति देवीबुद्ध्यनुसारेण। न तु किमप्यत्र निमित्तं पश्यामि, निर्निमित्तं च न घटत इति निमित्तपरीप्सा। पर्याप्तपर्यनुयुक्तस्य पर्याप्तं परिपूर्णं पर्यनुयुक्तस्य पृष्टस्य, उत्तरं वक्तव्यमेव यथा भवेत् तथा पृष्टस्येत्यर्थः। एतावद-

---

१. 'च्छेइ' ख. पाठः. २. 'विलोक्य)' ख. पाठः. ३. 'यः—अ' क. पाठः. ४. 'देवस्य श्री' क. पाठः. ५. 'यां जाता' क. पाठः. ६. 'कंचु' ख. पाठः.

सुयोधनस्यादेशात् परिवर्तितरूपेण रक्षसालम्बुसेन सा विहायसा नीता भगवत्सङ्कल्पवेदिना गरुत्मता पुनः कुमारीपुरं प्रत्यानीतेति ।

चेटी—(क) जीवाविदह्मि पदत्तिणाहेण । गच्छदु अय्यो । जाव अहं पि भट्टिदारिआए सआसं गमिस्सं ।

(निष्क्रान्तौ)

मिश्रविष्कम्भकः ।

---

(ततः प्रविशति यतिवेषधरो धनञ्जयः)

धनञ्जयः—(दीर्घं निःश्वस्य) अयि भोः शूर्पकशासिन्! अवितथ-

---

(क) जीवितास्मि पतत्रिनाथेन । गच्छत्वार्यः । यावदहमपि भर्तृदारिकायाः सकाशं गमिष्यामि ।

---

वगतमिति । सिद्धं कथयामि । अनेन तवाकाङ्क्षा शाम्यति वा न वेति न निश्चयः । अनुमतिलेशोपलम्भादिति । किञ्चिदङ्गीकार· कार्यकरो वा न वेति तेन न निरूपितम् । तेन विहायसा नीता गरुत्मतानीतेत्येव ज्ञातम् ॥

जीवितास्मीति इदमेवास्माकं साध्यमिति पुरुषविशेषजिज्ञासामाच्छाद्य कृतार्थताप्रकाशनम् । अत एव गच्छत्वार्य इति तद्गमनानुमतिः ॥

एवं विष्कम्भकेण सूच्यसूचनानन्तरमङ्कादौ नायकप्रवेशः प्रतिपाद्यते । अथ नायकः प्रथमं गुणश्रवणेन सुभद्रां प्रति जातानुरागस्तामेव प्रमथहस्तरक्षितामन्यां सङ्कल्पयन् विपर्ययद्वयभ्रमेण द्विशासमनुरागमवलम्बमानो यतिवेषावलम्बनेन साध्यनिर्बन्धं प्रकाशयन् रैवतकप्रमथमाश्रितः, अभिलाषशृङ्गारस्य चिन्तास्मृतिगुणकथोन्मादाद्यवस्थान्तराणि रतिरसायनतरङ्गायमाणानि भूयो भूयोऽवलम्बमानः, अन्तरा चित्तविभ्रमरूपेणोन्मादेन मदनं सङ्कल्प्य वदति—अयि भो इत्यादि । भो इत्याह्वाने । मत्पीडनव्यग्रेणापि त्वया किञ्चिदाभिमुख्यं देयम् ।

---

१. 'स्य निर्दे' क. पाठः. २. 'धारी प्र' क. पाठः.

माहुरागमविदः, यत् परनिबर्हणपराणामपरिहरणीया दुःखपरम्परेति । तथाहि मम—

अतिलघयसि लज्जां धैर्यबन्धं धुनासि
प्रथयसि परितापं प्रश्रयं प्रक्षिणोषि ।
अविरतिभिरमीभिः कर्मभिः क्षीयमाणः
स्वयमपि परिपीडामात्मनस्त्वं तनोषि ॥ २ ॥

अयीत्यनुवर्त्तने । महत्तुरतवाह्वानं परुषभाषणायेति न मन्तव्यम् । त्वत्किङ्करेण मया भवत्पीडामसहमानेन त्वं बोध्यसे । शूर्पकशासिन्निति पूर्वं बलवद्विग्रहेण जितश्रमस्येदानीमस्मदादिपीडने न परिश्रम इति निरूपितम् । तथा न दृश्यते । अत आप्तवचनस्याविसंवादित्वं निश्चीयते । आगमविदः शास्त्रज्ञाः सत्यमेव वदन्ति । परनिबर्हणपराणां परनिर्भर्त्सैकतत्पराणां, दुःखपरम्परा आत्मन इति शेषः । परपीडनैमप्रवृत्तिपरम्परायामात्मनोऽपि तत्कृता दुःखपरम्परा न परिहार्या । स्वस्थेनैव परपीडनं यदि क्रियते, तर्हि शोभनम् । अन्यथा परस्य धावनाय स्वयमपि धावतीति न चतुरश्रम् । किमत्र मया कृतमिति चेच्छृणु । मम लज्जाम् अकृत्येष्वप्रवृत्तिकरीम् अतिलघयसि । एतदन्यद्वारेण जातु शक्यम् । धैर्यबन्धं धैर्यस्य गुरुशास्त्रश्रवणादिभिः स्थैर्यं शिथिलीकरोषि । परितापमन्तर्बहिर्व्याप्तं दोषरूपं पुनःपुनरुपचिनोषि । प्रश्रयं स्वाभाविकं सांस्कारिकं च विनयं प्रकर्षेणाविनयप्रवृत्तिपर्यन्तं निरस्यसि । सर्वत्र वर्तमाननिर्देशेन प्रवृत्तेरविश्रान्तिः प्रकाश्यते । अत एवाविरतिभिरित्युक्तम् । अमीभिरित्युपलक्षणम् । तेन कानिचिदुक्तानि, पुनरपि विवेकनिरसनादीनि बहूनि सन्ति । ईदृशैः कर्मभिः पृथक् सम्भूयानुलोम्येन प्रातिलोम्येन वा क्रियमाणैः क्षीयमाणः देहमनसोः कार्श्यमवलम्बमानः आत्मनोऽपि पीडां तनोषि । क्षीयमाणत्वेन तव पीडा कल्प्यते । आत्मनोऽपीति मत्प्रतिसम्बन्धिविषयभूतस्य मम पीडा किं कथ्यताम् । स्वयमिति परस्य पीडा क्रियतां, तन्निर्बन्धेनात्मनः पीडामपि सहसे, अहो दौर्जन्यस्य प्रभाव इत्याक्षेपस्फुरणम् ॥ २ ॥ एतदाध्यं ग्रन्थानुसारेणैव मया क्रियते । मत्प्रेरणं विना तव प्रवृत्तिर्न घटत इति चेत्, तत् सत्यम् । [illegible]

१. 'मा' क. पा. २. 'रपान' क. पा. ३. '[illegible]' ख. पा.

(विचिन्त्य) अप्राप्तसुभद्रासङ्गमे मयि सोऽयमुचितस्ते व्यापारः। अन्तरेण पुनरन्यामन्याय्यमाचरसि। कुतः—

मया किं सा नोढा प्रमथकरदत्ता* प्रियतमा
तया किं नाश्लिष्टो रतिरपि न जाता मनसि मे।
दुनोपि त्वं कस्मादनृणमपि तस्यां जनमिमं
स कौण्डिन्यः साक्षी मम भवति तस्मिन् व्यतिकरे॥ ३॥

---

द्रासङ्गमे श्रवणमात्रजनितानुरागे साध्यान्तर विमुच्य त्वद्दिशिखप्रेरणानुसारेण तत्सिद्धौ प्रवृत्ते मयि यावत्फलोदय सोऽयमुक्तरूपो(ऽय¹) लज्जालघूकरणादिव्यापार उचित। अत्र नाधिक्षिपामि। यावत्फलोदय प्रवृत्तिरेवं युक्ता। अन्यामन्तरेण भूतहस्तरक्षिता प्रत्यन्याय्यमनुचितमाचरसि। किमत्रान्याय्य, सापि तव लभ्येति चेत्, तत्र साध्य सिद्धमेव। सिद्धसाध्ये मयि पुन प्रवृत्तिर्विफलैव। मया सा किं नोढा किं न धृता परिणीतेति च। तत्रापि स्वयग्रहण न युक्तमिति चेत्, तत्र। प्रमथकरदत्ता प्रमथकरेण दत्ता दाने करस्यौचित्यमिति करग्रहणम्। प्रातिकूल्येनापि नम्य दातृत्व सिद्धम्। तत्रापि युवयोर्घटन मदधीनमिति चेत्, तदपि निर्वृत्तम्। तया किं नाश्लिष्ट आश्लिष्ट एव। आश्लेषे कर्तृत्वनिर्देशेन तस्या रतिश्च प्रकाश्यते। तथापि तव सङ्गमसुख मया सम्पाद्यमिति चेत्, तदपि सिद्धमेव। रतिरपि अनुभूतिरूपा। "सर्वेन्द्रियाणामान दो रतिरित्यभिधीयत" इति विषयेन्द्रियसम्बन्धजनित सुखमत्र रति, न त्विच्छारूपा, तस्या प्रवृत्तिकारणत्वात्। अत एवानृणामित्युक्तम्। सर्वत्र किं नेति क्षेपेण त्वमपि नात्र वैदेशिक इति प्रकाशितम्। तस्या ता निमित्तीकृत्य इम जनम् अनृणमप्यवश्यकर्तव्यरहितमपि कस्माद् दुनोपि पीडयसि। सिद्धसाध्ये पुन प्रवृत्तिस्तव परपीडननिर्बन्ध एवेत्यधिक्षेप। साक्षिसवादरहितोऽय तव व्यापार इति चेत्, तत्र। स कौण्डिन्य मम सखा। तस्मिन् व्यतिकरे तद्ग्रहणादिरूपे व्यापारे मम साक्षी भवति। अतो निरपवादोऽय परिग्रहप्रकार॥ ३॥ प्रस्तुते कर्मणि सुभद्रापरिग्रहोपायभूते मस्करिवेषधारीत्या-

---

१ 'यात्र यु' ख पाठ

---

* 'मुक्ते'ति मूलकोशयो पाठ

(पुनर्विचिन्त्य) किन्नुखलु प्रस्तुते कर्मणि व्याप्रियमाणं मामनुमंस्यते वयस्यो वासुदेवः। (आकर्ण्य) अये कुतो-ऽसौ स्यन्दनध्वनिः। (पुरतो विलोक्य सानन्दम्) एतौ सङ्कर्षणवासुदेवौ स्यन्दनादवतरतः। (पुनर्वासुदेवमवलोक्य सरोमाञ्चम्) कथमहमेनमपरिरभमाणस्तिष्ठामि।

(ततः प्रविशतः सङ्कर्षणवासुदेवौ)

सङ्कर्षणः—वासुभद्र! इमौ स्वः प्राप्तौ काञ्चनोद्यानम्। अहो रामणीयकमस्य। *इह हि—

सान्द्रैः कृतान्यलिकुलानि हिरण्मयानि
हेमप्रसूनमकरन्दरजोवितानैः।

---

दिना पूर्वं प्रसक्ते। व्याप्रियमाण वेषपरिग्रहादिना प्रवृत्तम्। अनुमस्यते अनुज्ञास्यति। वयस्य इति तदनुमतिरेवापेक्षितेति सूचितम्। वयस्यत्वेनैव विश्वासादनुमतिपरिग्रहात् प्रागेव व्याप्रतिरिति च बुद्धिः। अपरिरभमाण इति। पूर्वं व्यालोलेत्यादिनाश्लेपसम्भ्रमः कृतः। इदानीं सहसा समाश्लेषे प्रस्तुतविरोधो भवेत्। अपरिरम्भे मनसः स्थैर्यं च न भवतीति कथं तिष्ठामीत्युक्तम्॥

इमौ स्व इति काञ्चनोद्यानमिति। तत्र भगवन्निवासस्य श्रुतत्वात् प्राप्यदेशं प्राप्ताविर्त्यथः। रामणीयकं रमणीयत्वम् अहो आश्चर्यकरम् अतिशयितमित्यर्थः। तत् प्रतिपादयति—इह हीत्यादिना। इह नान्यत्रैवं दृष्टं, काञ्चनोद्यानत्वाद् वृक्षलतादीनां कनकमयत्वेन हेमप्रसूनानां मकरन्दरजोवितानैः मकरन्दमिलितरजःसञ्चयैः। मकरन्दसम्बन्धेन रजसामवयवसंश्लेषेणार्द्रीभावः। तत एव सान्द्रत्वम्।

---

१. 'परतुनि व्या' क. पाठः. २ 'य' क. पाठः. ३. 'यय) ए' क. पाठः. ४. 'वं विलो' क. पाठः.

---

* 'अत्र' इति मूलकोशयो. पाठः.

आनीयते परिणतोऽपि महीरुहाणां
छायाभिराभिरतिशैशवमातपोऽयम् ॥ ४ ॥

वासुभद्रः — (आत्मगतम्) नूनमनिच्छतोऽपिच्छद्मान्यसत्ये कर्मण्य-
वतारयन्त्यतिगुरूणि मित्रकार्याणि । तथाहि—

वेषं दोषानुषङ्गक्षयविशदधियामाश्रयन् मुक्तिभाजां
पार्थः प्रध्वस्तधैर्ये[2] मनसि कृतपदां माधवीं ध्यायतीति ।
प्रोद्भिन्नस्य स्मितस्य प्रभवमुपचितप्रेमविक्षिप्तशङ्कां
पृच्छन्तीं सत्यभामामकरवमयथाभूतवस्तूपलम्भाम् ॥५॥

---

तेनालिकुलानां मधुपानमिलितानां पादपक्षादिषु कनकमयमकरन्दरजोरूपितत्वाद् दर्शने हिरण्मयत्वं प्रतीयते । अयमातपो महीरुहाणामर्थात् कनकमयानां छायाभिरतिशैशवमानीयते । कनकमयवृक्षच्छायासम्पर्कादातपस्य बालातपवर्णत्वं भवति। परिणतोऽपि जरठोऽपि । बालातपाज्जरठस्य वर्णान्तरप्राप्त्यैवमुक्तम् । अतिशैशवमिति । औष्ण्याभावो न घटते, वृक्षच्छायया चण्डातपस्य निरोध एव भवेत् ॥४॥

नूनमित्यादि स्ववृत्तेन सामान्यस्य स्थिरीकरणोपक्रमः । अतिगुरूणीति । सत्यादिति शेष । मित्रकार्याणि स्वगौरवेणच्छद्मानपेक्षिणोऽप्यसत्यमार्गे प्रेरयन्तीत्यर्थः । वेषमित्यादि । दोषानुषङ्गक्षयविशदधिया कामादिदोषदशकानुबन्धराहित्येन विशदधियां निर्मलधियाम् । सात्त्विकानामित्यर्थः । तेषामेव मुक्तिभाक्त्वं भवेत् । तद्वेषमाश्रयन् पार्थः साध्यबलात् स्वाधिकारविसदृशवृत्तिः प्रध्वस्तधैर्ये मनसि विसदृशवेषानुसन्धाननिवारकधैर्यहीने मनसि कृतपदां माधवीं ध्यायति । तत्र त्वेतादृशध्येयस्थापनेऽनुसन्धाने च विसदृशप्रत्ययेन न तिरोधानमिति ध्यायतीत्युक्तम् । इति प्रोद्भिन्नस्य स्मितस्य इति मत्वेति शेष, प्रोद्भिन्नस्य निमित्तबलात् सहसाप्रकाशस्य स्मितस्य प्रभव निमित्तं पृच्छन्तीम् । उपचितप्रेमविक्षिप्त शङ्कामिति केनेदानीं स्मितं जातमित्येवम्प्रकारप्रश्ने न कथितम् । कथनाभावे पुनर्न पृच्छामीति तया न निवृत्त, यत उपचितेन प्रेम्णान्योन्यविषयेण विक्षिप्त-

---

१. 'धर्मन्यव' क. पाठ.. २. 'र्यो' ख. पाठः. ३. 'भावरपर्न न' ख. पाठ'. ४. 'शङ्का' ख. पाठ.. ५. 'तैकवारं' ख. पाठ'.

(प्रकाशम्) आर्य! अयं स भगवानन्त्यमाश्रममनुगृह्णानो हैममध्यास्ते शिलातलम्। उपसर्पावस्तावदेनम्।

(उभावुपसृत्य प्रणाम कुरुतः)

**धनञ्जयः**—स्वस्तिमन्तौ भूयास्तामिहभवन्तौ।

**सङ्कर्षणः**—उभौ परमनुगृहीतौ स्वः। अपि च भगवन्!

आत्मानं विविनक्षि निह्नुततमोग्रन्थिं प्रकृत्याः परं
कच्चित् कच्चिदुदासते तव धियः कर्मच्छिदः कर्मसु।
अप्यत्येपि गुणानविप्लवकथाभिज्ञां प्रपन्नश्च किं
क्लेशच्छेदपटीयसीमसि दशां द्वन्द्वप्रतिद्वन्द्विनीम् ॥ ६ ॥

---

शङ्कां निरस्तवितर्काम् अय वक्ष्यति वा न वा, अहं पृच्छामि वा न वेति वितर्करहिताम् अह पृच्छाम्येव, अय वक्ष्यत्येवेति निश्चयवतीम्। अयथाभूतवस्तूपलम्भामकरव, स्मितनिमित्तकथने साध्यविरोधो[2] भवेद्, अकथने तस्या वैमनस्यं भवेदित्यन्यथाभूतवस्तुबोधामकरवम्। स्वतोनिमित्तमाच्छायासत्यं सुयोधनदौरात्म्यादिकं निमित्तान्तरमुद्भाव्य तत्र तस्या वस्तुबोधं जनयित्वा विश्वासमकरवमित्यर्थः ॥ ५ ॥ अन्त्यमाश्रममनुगृह्णानः स्वपरिग्रहेणेति शेषः। सर्वस्याधिकारिपरिग्रहे कृतार्थता भवेदिति भावः ॥

इहभवन्तौ अत्रभवन्तौ ॥

अथ बलभद्रोऽनुग्रहाङ्गीकारपूर्वं पृच्छति—**अनुगृहीतौ स्वः** मधुरदृष्टिपाताशीर्वादादिना। भवदनुग्रहपात्रभूतः पृच्छामि च। अपिशब्दः प्रश्नद्योतकः। भगवन्! समग्रज्ञाननिधे! जन्तुकष्टविश्रान्तिरोप्यस्य भवतो गौरवं जानन्नपि शिष्यवत् स्थितिबुभुत्सया पृच्छामि। केचित् श्रेयसि प्रवृत्ता अपि विघ्नोपसर्गैर्निरुध्यमानाः परिभ्रमन्ति। तथा किं न भवसीति सौजन्यसुलभयापायशङ्कया पृच्छ्यसे। आत्मानं परमात्मानम् उपेयम्। प्रकृत्याः परम् उपरितनम्। विविनक्षि आगमानुगतया बुद्ध्या पृथक्करोषि।

"मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त।
षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥"

---

१. 'म' ख पाठ. २ 'नि' ख. पाठ. ३. 'दर्शय' ग. पाठः.

इत्यादिविवेचनप्रकार. पूर्वं कथित । "प्रकृतेः परमापदव्यय पुरुषमि"ति, "तद्दर्शिनमुदासीन त्वामेव पुरुष विदुः" "बहिर्विकारं प्रकृतेः पृथग्विदः पुरातनं त्वां पुरुषं पुराविदः" इत्यादि च महाकविभिरुद्घोषितम् । तदनुसारेणोक्तिः । "प्रकृतिपुरुषविवेकदर्शनान्मोक्ष" इति च मतम्। निह्नुततमोग्रन्थि निरस्तमायानिमित्तबन्धभ्रमम् ।

"बद्धो मुक्त इति व्याख्या गुणतो मे न वस्तुतः ।
गुणस्य मायामूलत्वान्न मे मोक्षो न बन्धनम् ॥" (श्री. भा. ११. ११. १.)

इति भगवदुक्त्यनुसारेण निर्विकारस्य सच्चिदानन्दरूपस्य कथं बन्धमोक्षव्यवहारः। एतदर्तावेद्यमिति प्रथमः प्रश्नः । 'कच्चिदिष्टपरिप्रश्न' इति पुनरुपायमार्गं पृच्छति— तव धियः कर्मसूदासते कच्चित्। धिय इति धीवृत्तयः। कर्मसु प्रवृत्तिनिवृत्तिविषयतत्तत्कर्मतत्फलप्रकारेषु । उदासते निरपेक्षा. कच्चित् । यतः कर्मच्छिदस्तव कर्मच्छेदनं तवाश्रमाधिकारः, कर्मणा बन्धकत्वात् । इदं न प्रष्टव्यं, तथापि केचित् कर्ममार्गं परिमोक्तुमशक्ता दोलायितचित्तवृत्तयो दृश्यन्ते, तथा किं न वैषम्यमिति प्रश्नः । तेन फलितं पृच्छति—अप्यत्येषि गुणान्[1], गुणान् सत्त्वरजस्तमांसि निखिलमलनिदानभूतान् गुणानतिक्रम्य वर्तसे ।"सत्त्वेनान्यतमौ हन्यात् सत्त्व सत्त्वेन चैव हि ।" (श्री. भा. ११. १३. १) इत्युक्त्या

"अविद्यां श्रेष्ठया श्रेष्ठां क्षालयन्निव तिष्ठति ।
मल मलेनापहरन् युक्तिज्ञो रजको यथा ॥"

इति च गुणैरेव गुणोच्छेद । सत्त्वस्य परकाष्ठाया जाग्रदाद्यवस्थात्रयातीते तुरीये विश्रान्तिः । अतोऽत्येपीत्युक्तम् । अविघ्नवेत्यादि । किमनेनोपायविषयेण प्रश्नेन, एवम्भूतां दशां प्रपन्नश्चासि किम् । दशां विदेहमुक्तयेत्यामवस्थां, प्रपन्न. ज्ञातवान् । दग्धपटन्यायेन ससारानुबन्धेऽपि समाधिदशाम् अनुभवसीति वा । अविघ्नवकथाभिज्ञाम् "अच्छेद्योऽयमदाह्योऽयमि"(भ. गी. २. २४ )त्याद्युक्तदिशा एकप्रकाराम् । क्लेशच्छेदपटीयसीम् अविद्यास्मितारागद्वेषा(भिनिवेशा)ख्यपञ्चक्लेशनिर्मूलननिपुणाम्। द्वन्द्वप्रतिद्वन्द्विनीं शीतोष्णसुखदु खादिविरुद्धाम् । "न तत्र दु ख न सुख न द्वेषो नापि मत्सर" इत्युक्तत्वादवाङ्मनसगोचरामपि स्वरूपतटस्थलक्षणै. श्रुतिस्मृत्यादिभिर्लक्षितामिति परमसाध्य प्रति प्रश्न । अत्र साध्यसाधननिष्ठाना बहूना व्यापाराणां सममेव नित्याभ्यसन युक्तमिति 'विविनक्षि' 'उदासत' इत्यादि सर्वत्र वर्तमाननिर्देशेन प्रकाश्यते। अत्र प्रथमेन प्रश्नेन नित्यवस्तुविवेक, द्वितीयेन कर्मोदासीन्यद्वारेहामुत्रार्थफलभोगविराग, तृतीयेन गुणातिक्रमसाध्या

---

१. 'ति द्व' क पाठ २ 'मेप' क पाठ ३ 'नृ रा' क. पाठ. ४ 'स्याती' क. पाठ.

**धनञ्जयः**—प्रयतेतराममुष्मै श्रेयसे। सिद्धिस्तु पुनरस्य, हृषीकेशस्य कटाक्षपातापेक्षिणी।

**वासुभद्रः**—न खल्वन्यापेक्षिणी भगवतः सिद्धिः। तथाहि—

यस्याः कृते यतिधुरामवलम्बमानो
　योगं दधासि नचिरादपुनर्निवृत्तिम्।
क्लेशं जहत् सहभुवं मधुरां मतिर्मे
　प्राप्नोषि निर्वृतिमचिन्त्यरसां सुभद्राम्॥७॥

---

शमदमादिसाधनसम्पत्, चतुर्थेन जीवन्मुक्तपदविश्रान्तिरूपा मुमुक्षापरकोष्ठा च यथाक्रमं प्रकाश्यते[1]। एवमस्य विवरणदिक्॥ ६॥

अमुष्मै श्रेयस इति। अत्र प्रश्नशेषतया वाच्यार्थघटनम्। व्यङ्ग्यतया वासुदेवं प्रति स्वसाध्यप्रार्थनम्। अमुष्मै भवत्प्रश्नोत्तरसमाप्तिरूपाय। श्रेयसे प्रशस्यतमाय साध्यायेति वाच्यम्। अमुष्मै आवयोर्बुद्ध्युपारूढाय श्रेयसे धर्मपत्नीलाभाय। प्रयतेतरां दिवानिशमेवं वेषपरिग्रहादिरूपं प्रयत्नं[2] करोमीति वासुदेवं प्रति व्यङ्ग्यम्। तत्र सर्वत्र न हस्ताभिनयः नयनविकारादिभिरेव प्रकाशनम्। सिद्धिस्तु कैवल्यरूपा फलोदयः। *अमुष्येति श्रेयोविशेषणम्। हृषीकेशविशेषणत्वे व्यङ्ग्यमतिप्रकाशं भवेत्। यद्यपि कृष्णस्य हृषीकेशत्वमेव, तथापि मानुषाविर्भावानुगुणमेव वक्तव्यम् ईश्वरकटाक्षानुसारिणी न पौरुषसाध्येति। व्यङ्ग्ये तु किमनुमंस्यते वयस्यो वासुदेव इति विकल्पमपोहितुं मया प्रश्नः क्रियते भवन्मतमविज्ञाय। तद् अनन्यशरणे मयि कारुण्येनेदं साध्यतामिति प्रकाश्यते॥

एव तदभिप्रायं ज्ञात्वा साधारण्येन भगवत उत्तरं—न खल्वन्यापेक्षिणीत्यादि। अत्राप्यन्यशब्देन विशेषगोपनं कृतम्। अन्यथा मदपेक्षिणीति वक्तव्यम्। यस्या इत्यादि। त्वं तां निर्वृतिं नचिरात् प्राप्नोषि। निर्वृतिं मुक्तिम्। नचिरात् क्षणाद्। अनेनैव चरमदेहेन। यस्याः कृते यां निर्वृतिं निमित्तीकृत्य।

१. 'ते॥' ध पाठः　२. 'प्रयत्न कि' ख. पाठ.

---

* 'अस्य' इत्येव मूलकोशयोः पाठः। स एव च युक्तः। तदनुरोधेन च व्याख्यातुः प्रतीयते। अन्यथा विप्रकृष्टव्यवहितस्यादश्शब्दस्य हृषीकेशविशेषणत्वे व्यङ्ग्यार्थप्रकाशकत्वेऽपि स्वरसागतता स्यात्। इदमत्र गभीरत्वार्थिना ग्राह्यता।

**धनञ्जयः**—(सहर्षं स्वगतम्) दिष्ट्या दत्तैवामुना मम माधवी। (प्रकाशम्) पुष्करेक्षण! अहममुष्माद् युष्मदनुग्रहात् प्राप्तामेव तां मन्ये।

**वासुभद्रः**—(अपवार्य) आर्य! क्व नु खलु विविक्ते योगसिद्ध्यै वस्तव्यमिह भगवद्भिः।

**सङ्कर्षणः**—वासुभद्र! किं नामान्यदतिविविक्तात् कन्यापुरादस्याभिमतसिद्ध्येऽनुरूपम्। (परितो विलोक्य) कोऽत्र भोः।

(प्रविश्य)

**काञ्चुकीयः**—विजयेतां देवौ। अयमस्मि।

---

यतिधुरां निवृत्तिधर्मम् अवलम्बमानः। योगं 'संयोगो योग इत्युक्तो जीवात्मपरमात्मनोः' इति लक्षितं समाधिं धारयसि। क्लेशं जहादिति प्राप्तिसमकालोचितं फलमाह। क्लेशम् अविद्यादिकम्। सहभुवं द्वैतपरिग्रहानुबद्धम्। मधुरां हृद्याम्। यद्यपि मधुरशब्दो रसविशेषवाची, तथापि 'मधुरं वपुः' 'मधुरा दृष्टिः' 'मधुरं चरितम्' इत्यादिषु हृद्यत्वं लक्ष्यते। अचिन्त्यरसाम् अनिरूपणीयपरमानन्दात्मकस्वरूपवतीम्। अत एव हृद्यत्वमिति भेदः। सुभद्रां परमकल्याणरूपिणीम्। अतः परं किं कल्याणम्। एवम्भूता निर्वृतिं नचिरात् प्राप्नोषीति मे मतिः। इति वाच्यार्थः। व्यङ्ग्यम्तु—यस्याः कृते यतिधुरां विरुद्धमपि यतिवेषं साध्यनिर्बन्धेनावलम्बमानो योगं सङ्गमं तदुपायं वा दधासि आकाङ्क्षसि। क्लेशं लिप्सानिर्बन्धकृतं व्यसनं त्यजन्। सहभुवं सोदरीम्। मधुरां हृद्यतया भवच्चित्तवर्तिनीम्। अचिन्त्यरसाम् अचिन्त्यत्वद्विषयानुरागाम्। अनेन परस्परानुरागकृतं प्राप्तियोग्यत्वं प्रकाश्यते। सुभद्रानामधेयां मे सोदरीं नचिरात् प्राप्स्यसीति मे मतिः। मतिरेवात्रानुसर्तव्या। दास्याम्येवेत्यर्थः। निर्वृतिं निर्व्यूढवरणां, पूर्वमेव त्वां मनसा धृतवतीमित्यर्थः। अथवा मतिर्मे निर्वृतिं युवयोः सङ्घटनात् प्राप्नोतीति विपरिणामेन योज्यम्। अत्र व्यङ्ग्यस्य न हस्ताभिनयः, स्मितदृष्टिपातभ्रूविलासादिभिरेव प्रकाशनं युक्तम्॥ ७॥

युष्मदनुग्रहादित्यत्रापि विशेषगोपनाय युष्मदित्युक्तं, न त्वदिति। तामिति निर्वृतिसुभद्रयोः साधारण्येन निर्देशः॥

**सङ्कर्षणः**—विनयपालित! इमं भगवन्तं पुरोधाय कुमारीपुरमुपगतेन भवता वक्तव्या सा माधवी "अस्य भगवतो विविक्ताभिलाषिणो निजकरपरिवर्धितमाधवीमनोहरं माधवीलतागृहं ध्यानस्थानीकृत्य यथाभिमतमेनं शुश्रूषस्वे"ति। (वासुदेवमवलोक्य) वासुभद्र! किं वा भवान् मन्यते।

**वासुभद्रः**—नन्वार्य एव प्रमाणमीदृशेषु कर्मसु।

**काञ्चुकीयः**—यथा देवावाज्ञापयतः।

**सङ्कर्षणः**—भगवन्! पादपांसुभिः पवित्रीक्रियतां कन्यापुरम्। आवामपि निजप्रयोजनाय प्रचलावः।

(निष्क्रान्तौ)

**काञ्चुकीयः**—(सप्रणामम्) भगवन्नित इतः।

**धनञ्जयः**—बाढम्।

(उभौ शैलादवतरणं नाटयतः)

**धनञ्जयः**—(सचिन्तं निःश्वस्य स्वगतम्) *अहोतुखलु सत्यमाह लोकः "साधीयसां वचसां कामदुघाः शक्तय" इति। तथाहि—

---

अथ साध्यसिद्ध्यनुगुणं तन्नियोगमवलम्बमानः सुभद्रां दिदृक्षुः कञ्चुकि(न)मनुसरन् मध्ये तद्रूपानुसन्धानरसिकतया प्रथमं सङ्कल्पबीजभूत गदमुखाच्छ्रुतं सुभद्रानामधेयं सिद्धमन्त्रवत् सम्मानयन्नाह--अहोतुखल्वित्यादि। अहोतुखलु यथा यथा विचार्यते, तथा तथा कौतुकमेवात्राविर्भवति। पूर्वं गतानुगतिकवृत्त्या लोकवाद इत्येव निरूपितम्। साधीयसां साधुतराणां विशिष्टलक्षणानाम्। भवतीत्यस्माद् योगवर्तिनि तन्निर्देशे तल्लक्षणज्ञाने च महत् पुण्यम्। तादृशानां वचसां शक्तयः प्रभावाः। कामदुघाः वक्तुः श्रोतुश्चाभीष्टप्रसविन्यः;

---

* 'अहोतुखलु' इति मूलकोशेषु न पठ्यते.

भ्रमदलिकुललोलापाङ्गमङ्गं मृगाक्ष्याः
स्तनविनमितमङ्गस्पर्शमप्रत्यनीकम् ।
मनसि गिरमुदारां गन्धमघ्रातपूर्वं
जनयति हि सुभद्राशब्दचिन्तामणिर्मे ॥ ८ ॥

---

"यस्तु प्रयुङ्क्ते कुशलो विशेषे शब्दान् यथावद् व्यवहारकाले ।
सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद् दुष्यति चापशब्दैः ॥"

इत्यादिसमर्थनात् । लोकः इति यदाह तत् सत्यमिति सम्बन्धः । सत्यम् अनुभवसंवादि । तदेवोपपादयति — तथाहीत्यादिना । भ्रमदलिकुलेत्यादि । सुभद्राशब्दचिन्तामणिः मे मनसि मृगाक्ष्या अङ्गं जनयति हीत्यन्वयः । सुभद्राशब्दचिन्तामणिः सुभद्राशब्दः प्रथमत आप्तमुखाच्छ्रुतः, स एव चिन्तामणिः सिद्धमन्त्रविशेषः । सामान्योक्तस्य कामदुघत्वस्य विशेषे स्फुटीकरणाय चिन्तामणित्वारोपः । मनसीति 'आत्मा मनसा संयुज्यते, मन इन्द्रियेण, इन्द्रियमर्थेने'ति मनःपरिग्रहे त्रयसन्निकर्षोऽपेक्षितः । तमनादृत्य शब्दो मृगाक्ष्या अङ्गं जनयति विशिष्टदेवतास्वरूपवत् प्रादुर्भावयति । मृगाक्ष्या इति संज्ञिग्रहण एव चारुत्वविशिष्टतया प्रतीतिः । तदनुगुणमङ्गं, न त्वङ्गमात्रं, सङ्कल्पे विशेषसर्वस्वस्फुरणात् । भ्रमदलिकुलवल्लोलापाङ्गं मेचकस्यापाङ्गकान्तिसन्तानस्य स्फुरणादलिकुलग्रहणम् । लोलत्वेन भ्रमदिति । एतदुपलक्षणं भ्रूविलासादीनां 'हेलाकृतः सश्रृङ्गारो हावोऽक्षिभ्रूविलासकृद्' इत्यङ्गजानां गुणानां निर्देशात् । स्तनविनमितं स्तनाभ्यामीषन्नतिं प्रापितम् । स्तनोन्नतिरत्र हेतुतया स्फुरति, 'आवर्जिता किञ्चिदिव स्तनाभ्याम्' इत्युक्तवत् । एतदुपलक्षणं सर्वाङ्गीणानां गुणानाम् । हिशब्दोऽवधारणे । नात्र मनागपि चक्षुषः प्रवृत्तिमपेक्षते । अङ्गमेवं कल्प्यतां, स्पर्शादिकं विना किं फलितमिति चेत्, तदपि सिध्यत्येवेत्याह — अङ्गस्पर्शं तादृशस्याङ्गस्य स्पर्शम् । स्पर्शस्याश्लेषादिरूपत्वेन सर्वाङ्गीणत्वं प्रकाशयितुमङ्गग्रहणम्, अन्यथा स्पर्शमित्येवालम् । तत्रापि विशेषः अप्रत्यनीकम् अनुपमम् । नेदृशः स्पर्शोऽनुभूतपूर्वः । अत्र त्वचं नापेक्षते । स्पर्शोऽपि सङ्कल्प्यतां, मधुरालापश्रवणं वक्तारं विना कथं घटेत इति चेत्, तदपि सिध्यतीत्याह — गिरमुदाराम् अग्राम्यपदसन्दर्भरूपिणीं

( ध्यायन् परिक्रामति )

**काञ्चुकीयः**—(सप्रणामम्) भगवन्नग्रतस्ते कुमारीपुरोपान्तवर्त्ति प्रमदवनम्। मुहूर्त्तमत्र विश्रम्यताम्। यावदहमपि चित्रकूटप्रासादगतायै भर्तृदारिकायै सुभद्रायै भगवदागमनं निवेदयामि। (अवलोक्य विचिन्त्य स्वगतम्) अहोतुखल्ववधानशून्योऽयमस्य दृष्टिपातः। मन्ये महात्मनाम् एतादृशानामात्मनि जाग्रतां बहिरिन्द्रियाणि निद्रान्ति। (प्रकाशं भगवन्निति पूर्वोक्तमेव पठति)

**धनञ्जयः**—(श्रुत्वा) एवमस्तु।

**काञ्चुकीयः**—अनुगृहीतोऽस्मि।

(निष्क्रान्तः)

---

विनयसौजन्यप्रकाशिकां वाचम्। अघ्रातपूर्वम् इतः पूर्वं घ्राणेन्द्रियाविषयीकृतं लोकोत्तरम्। मृगाक्ष्या इति सर्वशेषः। एवमिन्द्रियार्थसम्बन्धमनपेक्ष्य सङ्कल्पपरम्पराभिरेवानुभवसर्वस्वसिद्धिः। तत्र सुभद्राशब्द एवालम्बनम्। एवमिदानीमेवाभीष्टप्रसावकत्वादस्याधिक्यम्। अत एव जनयतीत्युक्तम्। अन्येषां स्वर्गादिष्वेव कामधुक्त्वम्। एवं स्थिते लोकवादे ममानुभवसंवादो जातः॥ ८॥

अवधानशून्यः मनोनुबन्धरहितः। तत्रोपपत्तिं कल्पयति—मन्य इत्यादिना। महात्मनाम् आत्मारामाणाम्। आत्मनि जाग्रताम् आत्मानुसन्धानपराणाम्। बहिरिन्द्रियाणि बहिष्करणानि श्रोत्रादीनि। निद्रान्ति स्वविषयग्रहणानास्थानि॥

अथोद्यानं प्रविष्टः 'ऋतुमाल्यालङ्कारैरि'त्यादिसूत्रनीत्या ऋतुविशेषं शृङ्गा-

---

१ 'द्यामिन्द्रि' ट. पाठः.

धनञ्जयः—(प्रमदवनप्रवेशं रूपयित्वा परितोऽवलोकयन्) *अहोतुखलु रमणीयोऽयमस्य शिशिरात्ययस्य शैशवातिवर्तिनो यौवनोपक्रमः । कुतः—

विश्लिष्यद्दलमालया प्रविरलैः पृथ्वीरुहामासवै-
रन्तर्बद्धकलङ्कया कलिकया प्रस्तूयते मञ्जरी ।
गायन्तो गलरागमङ्कुररसैश्चूतस्य चञ्चुक्षते-
श्च्योतद्भिः शिशिरोपरोधशिथिलं पुष्णन्ति पुंस्कोकिलाः ॥ ९ ॥

रशेषतया सकौतुकं वर्णयति—अहोतुखल्वित्यादिना । शिशिरात्ययस्य वसन्तस्य । अत्ययशब्द ऋतुपूपरितनवाची । शैशवातिवर्तिनः प्रारम्भावस्थातिलङ्घिनः । यौवनोपक्रमो मध्यावस्थासमारम्भः । रमणीयः प्रीतिकरः । शैशवयौवनशब्दाभ्यामृतुचिह्नानां कालकृतोऽवस्थाविशेषो लक्ष्यते । भोग्यत्वं च फलम् । शैशवातिवर्तिन इत्यनेन अतीतावस्थायाः किञ्चिदनुबन्धः प्रकाशितः । अन्यथा यौवनोपक्रम इत्येवालम् । तथा समर्थयति—पृथ्वीरुहाम् अर्थाद् वासन्तिकानां कलिकया मञ्जरी प्रस्तूयते, कलिका मञ्जरीत्वेन परिणमतीत्यर्थः । न च विकासपरिपूर्त्या मञ्जरीत्वं प्राप्तम् । न च सङ्कोचदार्ढ्येन मुकुलत्वम् । अत एव प्रस्तूयत इत्युक्तम् । तत्प्रकारमाह—विश्लिष्यद्दलमालया विश्लिष्यन्ती, न तु विश्लिष्टा, विभिन्नस्वरूपतया स्फुटीभवन्ती दलपरम्परा यस्याम् । प्रविरलैः स्वल्पतया विच्छिन्नैः आसवैः मकरन्दैः अन्तर्बद्धकलङ्कया अनुबद्धमञ्जरीत्वचिह्नया । गायन्तः पुंस्कोकिलाः चूतस्याङ्कुररसैः अर्थात् पीतैः शिशिरोपरोधशिथिलं शिशिरानुबद्धतुहिनकणसम्बन्धेन शिथिलम् अपरिस्फुटं गलरागं गलप्रवृत्तं रागानुगुणं नादं पुष्णन्ति । अङ्कुररससेवया शुद्धकण्ठत्वेन नादपोषः । रागग्रहणं गायकत्वशेषतया । 'चूताङ्कुरास्वादकषायकण्ठ' इत्यादिषु कूजने नादवैशद्यमेवोक्तम् । अङ्कुररसस्य सिद्धिं प्रतिपादयति—चञ्चुक्षतैर्हेतोश्च्योतद्भिः क्षरद्भिः । अत्र गानारम्भः प्रकाशितः । उभाभ्यां कार्याभ्यां वसन्तस्य यौवनोपक्रमः प्रकाशितः ॥ ९ ॥

१. 'तथाहि—' इति पाठः.

* 'अहो रमणीयो' इति मूलकोशेषु पाठः.

(स्मृत्वा) क्षणादक्षिणी मे पाययत्येव निजरूपसुधारसं सुभद्रा। यत् पुनरपरमर्थान्तरं, यदि तदप्यस्यां पुरि समासादयेयम्, अहमस्मि पुरस्सरः पुण्यकृताम्।

(नेपथ्ये)

(क) हळा छप्पदिए! छप्पदिए!

**धनञ्जयः**—(कर्णं दत्वा) अस्मिन् माधवीलतागृहे तन्त्रीस्वनसंवादी कलमधुरो ध्वनिः श्रूयते। उपसृत्योपलक्षयामि। (उपसृत्य स्थितः)

(ततः प्रविशति कामयमानावस्था सुभद्रा चेटी च)

**सुभद्रा**—(क) हळा छप्पदिए! छप्पदिए!।

---

(क) सखि! षट्पदिके! षट्पदिके!।

---

क्षणादित्यादि। निष्प्रतिबन्धतया झटित्येव अक्षिणी मे सफलजन्मनी निजरूपमेव सुधारसं पाययत्येव। नात्रोपायान्वेषणप्रयासः। यत् पुनरिति। अपरमर्थान्तरम् अतिलोभनीयतया अपरिच्छेद्यचारुतया चार्थान्तरं पदार्थान्तरमित्येव वक्तुं शक्यम्। योषिदित्यादिकथने तुच्छत्वं भवेत्। अस्यां पुरि अन्यत्र परिभ्रमेण विना प्राप्नुयां यदि, अहं पुण्यकृतां पुरस्सरः। अनेकजन्मोपार्जितसुकृतसञ्चयानामेव युगपदेवं स्त्रीरत्नद्वयलाभो घटत इति तथोक्तम्। अत्र रतिपरिपोषार्थमेकस्यैवालम्बनस्य द्विधा सङ्कल्पनं, पश्चादेकीभावनिश्चयेन निरतिशयानन्दकरत्व च प्रकाशयिष्यते॥

अथ सुभद्रायाः प्रथम गुणश्रवणेनार्जुन प्रति जातानुरागायाः पुनर्भूतसम्भ्रमे तमेवान्यथा परिकल्प्य द्विशाखतया प्रवृद्धरतेरभिलाषोचितस्मृतिविषादोन्मादादिभावविवशायाः प्रवेशः प्रतिपाद्यते। तत्र चित्तवैवश्येन निकटवर्तिनीमपि चेटीं यदृच्छयैवाह्वयति—हला षट्पदिके इति॥

आह्वानस्य वक्तव्यशेषतया तदश्रवणात् पुनःपुनराह्वानाद्य तस्याः शङ्का।

**चेटी**---(क) भट्टिदारिए! पुव्वं पि अहं सद्दाविदह्मि, ण किञ्चि भणि-†अ पुणो वि सद्दावीए । किं विअ एदं ।

**सुभद्रा**---(ख) हळा! किं मए सद्दाविदासि ।

**चेटी**---(आत्मगतम्) (ग) को विअ एसो संमोहो भट्टिदारिआए। तदो भूद*सम्भमादो आरहिअ अण्णादिसी विअ एसा । पुच्छिस्सं णं। (प्रकाशम्) आम, सद्दाविदह्मि। किं पुण वत्तुकामासि ।

---

(क) भर्तृदारिके ! पूर्वमप्यह शब्दापितास्मि, न किञ्चिद् भणित्वा पुनरपि शब्दाप्ये । किमिवैतत् ।

(ख) सखि ! किं मया शब्दापितासि ।

(ग) क इवैष समोहो भर्तृदारिकाया[1] । ततो भूतसम्भ्रमादारभ्यान्यादृशीवैषा । प्रक्ष्याम्येनाम् । आम, शब्दापितास्मि । किं पुनर्वक्तुकामासि ।

---

ता प्रकाशयति—**भर्तृदारिके** इत्यादिना । पूर्वमपि, न त्विदानीमेव । न किञ्चिद् भणित्वा आह्वानेनाभिमुख्य सम्पाद्य वक्तव्य बोध्यते सर्वत्र, तद् विना पुन. पुनराह्वान क्रियते, किमर्थमिति प्रश्न ॥

तत्र पूर्वोक्तमप्यनिरूपयन्ती पृच्छति—कि मया शब्दापिता आहूता। अह न स्मरामि ॥

इत्युक्ते चेटी विमृशति—**क इवैष सम्मोहः** चित्तव्याक्षेप किन्निमित्त । ततो भूतसम्भ्रमात् तस्माद् भूताकर्षणनिमित्तात् सम्भ्रमादारभ्य । न तस्मात् पूर्वमेव दृष्टम् । अन्यादृशी आकारेण वचनेन तदुन्नीतया मनोवृत्त्या चान्यथाभूतेवेत्यर्थ । तत् प्रक्ष्यामि । एतन्निमित्त श्रुत्वा परिहारोपायश्चिन्तनीय । तद्गोपित निमित्त निर्बन्धेन प्रकाशयामि । तदनूद्य व्याक्षेप प्रकाशयितु चेटी पृच्छति—किं पुनर्वक्तुकामासीति । वक्तुकामासीति निश्चय, अन्यथा कथमाह्वान घटते ॥

---

१ 'लक्षम्' क ग पाठ

---

† 'अ।' इति मूलकोशपाठ. * 'सम्मद्दादो' इति मूलकोशपाठ

सुभद्रा--- (क) हळा! सुमरिअ कहइस्सं। (ध्यायति)

धनञ्जयः----कथमन्योन्यान्वयशून्यान्यस्या वचांसि। नूनमनया मन्मथशरशरव्यतामुपगतया भवितव्यम्। भवतु तावदेनां निर्वर्ण्य निर्णेष्यामि। (लतावल्यान्तरेणावलोक्य सहर्षं सरोमोद्गमं च) अये स एवायमनिर्णीताकरो मणिः, यदुपलम्भे वयमनाशंसवः संवृत्ताः। (विचिन्त्य) दुर्विभाव्या दैवगतयः। कुतः---

(क) सखि! स्मृत्वा कथयिष्यामि।

इति निर्बन्धे विमृशति। स्मृत्वा कथयिष्यामीति। प्रथमं वक्तव्यस्य परिकल्पनं, तद्बोधनायाह्वानं, पुनस्तद्बोधनमिति क्रमे आह्वानानन्तरं वक्तव्यं विस्मृतमिति स्मृत्वा कथयिष्यामीत्युक्तम्॥

अन्योन्यान्वयशून्यानि उन्मत्तप्रलपितवत् परस्परसम्बन्धरहितानि। नूनमनयेत्यादि। नूनमिति वितर्के। मन्मथशरशरव्यतामुपगतयेति, अन्यथा कथमेवं व्याक्षेपो घटते। निर्वर्ण्य निर्णेष्यामीति। वचनानुसारी चेदाकार इदमेव निमित्तमिति निश्चेतुं शक्यमिति लतावल्यान्तरेणावलोकने पूर्वम् 'अपर्यवसित एव समाच्छिन्नोऽयममृतपानोत्सव' इत्युक्त्या पूर्वं प्रकाशितस्यार्धविच्छिन्नस्यौत्सुक्यस्य पुनः प्रतिसन्धानेन रोमाञ्चाद्यनुभावोल्लासितरसभावः सहर्षमाह—अये इत्यादि। अनिर्णीताकरः अनिश्चितप्रभवः। मणित्वाध्यवसायशेषतया आकरग्रहणम्। यदुपलम्भे यत्स्वरूपज्ञाने लाभे च अनाशंसवः पौरुषाविषयत्वेन विशीर्णेच्छा इत्यर्थः। अत एव दैवमेव प्रमाणमिति दैवेन साध्यत्वं परिकल्पितम्। दुर्विभाव्या अनेनेदमिति दुर्विज्ञेयस्वरूपा. दैवगतयः दैवस्याभीष्टसङ्घटनविघटनादिषु प्रवृत्तिप्रकाराः। पूर्वं सुभद्रालाभस्यौचित्यमवलम्ब्य पुरीं प्रति गमनं, तत्र मध्ये भूतकरपरिभ्रष्टायास्तन्व्या उपभोगयोग्यतया समीपदर्शनं, झटित्येव तिरोधानेनालभ्यत्वं जातं, पुनस्तदलाभेन खेदमवलम्बमानोऽप्यनुपायतया निराशः पूर्वप्रस्तुतं प्रति प्रवृत्तोऽहं पुनरपि तल्लाभात् प्रागेवालभ्यतया निश्चिता भूतकरपरित्रातामेव निरर्गलदर्शनान्नयनयो रूपामृतपानपूरणाय प्राप्तवानस्मीति प्रस्तुतमर्थमप्र-

प्रत्यासीदत् पथि कमलिनीं मानसाय प्रयात-
स्तत्रापश्यत् पुनरतिपयःपूरदूरावगाढाम् ।
भ्रान्त्वा मोहान्न तदुपगतो मानसं राजहंस-
स्तामेवाम्भोविगमसुभगामेष भूयोऽभ्युपैति ॥ १० ॥

स्तुतेन राजहंसवृत्तान्तेन प्रकाशयति—प्रत्यासीददित्यादिना । मानसाय प्रयातो राजहंसः पथि कमलिनीं प्रत्यासीदत् । मानसाय मानस प्राप्तिकर्मतयाङ्गीकृत्य । 'गत्यर्थकर्मणि' (२-३-१२) चतुर्थी । प्रयातः यातुमुपक्रान्तः । राजहंस इत्यनेन स्वतो मानसावासयोग्यत्वात् तद्गमनं प्रति सापेक्षत्वं प्रकाश्यते । पथि कमलिनीं प्रत्यासीददित्यनेन ग्रामं गच्छन् वृक्षमूलान्युपसर्पतीतिवदन्तरा सिद्धत्वेऽप्यौत्सुक्ययोग्यत्व पद्मिनीमित्यनेन प्रकाश्यते । प्रत्यासीदत् साम्मुख्येनाजगाम । लभ्यत्वबुद्ध्येति शेष. । अत्र कमलिनीशब्देन कमलमात्रं विवक्षितम् । 'नलिन्या इव तन्वङ्ग्याः' इत्यादौ आकरे 'महानदीप्रकीर्णेव नलिनी पोतमाश्रिता' इत्यादौ कमलमात्रे च प्रयोगो दृष्टः । तत्रापश्यत् पुनरिति । यत्र प्राप्तवान् तत्रैव, पुनः उत्तरक्षणमेव । अतिपयःपूरदूरावगाढामपश्यत् अतिशयिते पय.पूरे एतत्तिरोधानसमर्थे, अत एव दूरावगाढा भृशनिमग्ना पुनरलभ्यत्वबुद्धिजननीम् अपश्यत् ज्ञातवान् । अनेनान्तरा सिद्धाया अपि तस्या अलाभेन खेदो व्यज्यते । मोहाद् भ्रान्त्वेति । अत्रापि पुनरित्यनुपज्यते । मोहाद् वैचित्यात् प्रस्तुतालाभेन एतत्तिरोधानेन च विवश उभयलिप्सया परिभ्रम्य तद् मानसं नोपगतः । तत् प्रकृतम् । मानसमिति पुनर्निर्देशस्तस्य प्रथमप्राप्त्यौचित्यप्रकाशनाय । अथवा मानसं मनोगतं प्राप्यतया, तदनुपगतः भूयोऽपि तामेवाभ्युपैति तामेवान्तरा दृष्टां कमलिनीम् । अम्भोविगमसुभगा पूर्वं तिरोधायकस्याम्भसो विगमेन निष्प्रतिबन्धं दर्शनीयाम्, अत एव हृद्यतमा पूर्वं तिरोधानमात्रेण दौर्भाग्यं शङ्कितं, तदभावात् सुभगामित्युक्तम्। भूय. पुनरपि । प्रथम प्रस्तुत प्रति प्रवृत्तिः, मध्येऽन्यत्र लिप्सया (तां? यात,) पुनस्तद्विरोधेन प्रकृतं प्रति प्रयासः, तदलाभेन पुनरपि मध्येऽलभ्यत्वेन कल्पितमेव प्राप्नोति । अत्र तदनुपगत इत्यनूद्याभ्युपैतीति विधेयतया योजनम् । एष इति तृतीयवाक्यादौ । अत्र पूर्वं निरूपितस्यालाभः, अनिरूपितस्य झटिति दर्शनं, पुनस्तिरोधानं, पुन. प्रकृतसिद्धेः प्रागेवान्तरालिकस्य दर्शनमिति दैवकृतमेव । अतो दुर्विभाव्या इत्युक्तम् । सारूप्येणेयमप्रस्तुतप्रशंसा ॥ १० ॥

चेटी---(क) भट्टिदारिए! किं सुमरिअं।

सुभद्रा---(सनिर्वेदं स्वगतम्) (ख) पत्थगआणुराअं मम हिअअं अण्णहिं पि पुरुसे ओदरइत्ति सहीणं पि कहं आचक्खीअदि। ता एव्वं कहइस्सं। (प्रकाशम्) हळा! पमहबन्दिग्गहणसंभूदा भीदी अज्ज वि मं ण मुञ्चदि। तण्णिमित्ता एसा अस्सत्थदा।

चेटी--- (ग) भट्टिदारिए! ण सक्का छप्पदिआ एव्वं वञ्चेदुं। एदं[¶] दाव भणाहि, रम्मेसु विमुहदा, अङ्गेसु पण्डुहावो, अपरिहीयमाणसोहा, परिक्खीणदत्ति एदं पि किं

(क) भर्तृदारिके! कि स्मृतम्।

(ख) पार्थगतानुरागं मम हृदयमन्यस्मिन्नपि पुरुषेऽवतरतीति सखीनामपि कथमाख्यायते। तदेव कथयिष्यामि। सखि! प्रमथबन्दिग्रहणसभूता भीतिरद्यापि मां न मुञ्चति। तन्निमित्तैषास्वस्थता।

(ग) भर्तृदारिके! न शक्या षट्पदिकैव वञ्चयितुम्। एतत् तावद् भण। रम्येषु

किं स्मृतमिति 'स्मृत्वा कथयिष्यामी'ति पूर्वोक्तमनुसन्धत्ते। तस्या हृदयरहस्यं प्रकाशयितु चेट्या निर्बन्धः॥

पार्थगतानुरागमिति उचितस्थानसाभिलाषम्। अन्यस्मिन्नपि पुरुषेऽवतरति सानुरागं भवतीति सखीनामपि प्राणनिर्विशेषाणामपि कथमाख्यायते, अतीव कलङ्करूपत्वात्। तद् अस्वस्थतानिमित्तमन्यथा योजयामीति प्रकाशोक्तिः। प्रमथबन्दिग्रहणसम्भूता प्रमथस्य बन्दिवद् ग्रहणेन बलादाकर्षणेन सम्भूता भीतिरिति भीतेः प्राबल्यं गम्यते। अत एवाद्यापि न मुञ्चति कालान्तरेऽपि न शाम्यति, एतदेवास्वस्थताया निमित्तम्॥

इत्याच्छादनमसहमाना चेटी प्रतिक्षिपति---भर्तृदारिके! इत्यादि। भर्तृदारिके इति साम्मुख्येन कथयति। षट्पदिकैवं वञ्चयितुं न शक्या। उक्त-

१. 'लक्षम्' क. ख पाठः २. 'परिग्गहेण' क पाठः

[¶] 'त्त' मूलकोशपादः.

भीदीए होइ । किं एदिणा । एत्तिअं कालं तुह हिअणिव्विसेसा भविअ अज्ज एदस्स दुःखसंविभाअस्स अभाअणं अहं इदो वरं ण जीविअसुहाणि अणुभविस्सं। (उत्तिष्ठति)

धनञ्जयः—(समत्याशम्) सत्यमाह षट्पदिका। अत्रान्तरे किन्नु खलु प्रतिवचनमस्याः।

सुभद्रा—(ससंभ्रम तस्या हस्तमवलम्ब्य सास्रगद्गदम्) (क) हळा! मा साहसं

---

विमुखता, अङ्गेषु पाण्डुभावः, अपरिहीयमाणशोभा, परिक्षीणतेत्येतदपि किं भीत्या भवति । किमेतेन । एतावन्तं कालं तव हृदयनिर्विशेषा भूत्वाचैतस्य दुःखसंविभागस्याभाजनमहमितः परं न जीवितसुखान्यनुभविष्यामि ।

(क) सखि! मा साहसं कुरु। एतच्छ्रुत्वा त्वमेव मा परित्यक्ष्यसि । तच्छृण्वेतत्।

---

ग्राहिण्योऽन्याः पामर्यो वञ्च्यन्तां, नित्यपरिचिता विशेषज्ञाहं न वञ्चनीयेति प्रकाशयितुं षट्पदिकेत्युक्तिः । अहमित्युक्ते तथा न प्रतीतिः । एतत् तावत् कथय । अस्वस्थताया निमित्तं भयं भवतु । रम्येषु विमुखता, चन्द्रचन्दनवीणावेणुप्रभृतिषु पूर्वमभीष्टेषु वैराग्यम्, अङ्गेषु पाण्डुत्वम्, अपरिहीयमाणशोभा परिक्षीणता प्रतिक्षणं कार्श्ये सत्यपि उल्लिखितमणिवत् कान्तिरुन्मिषत्येव इत्येतानि भीत्या भवन्ति किं, नैवेत्यर्थः । किमेतेनेति । अनेन प्रश्नेन निरुत्तरेण किं फलम् । इयन्तं कालम् अतिशैशवादारभ्य । हृदयनिर्विशेषा विस्रम्भसर्वस्वपात्रभूता । इदानीं दुःखसंविभागस्य सुखसंविभागे मम नापेक्षा, तत् स्वयमनुभवतु, केनापि निमित्तेन दुःखमनुभूयते, तद् निमित्तकथनेन मयि साङ्क्रामिकं तव सोढव्यं भवतीति मम निर्बन्धः । तत्र तव न विश्वासः । अतो जीवितसुखे मम नापेक्षा । तव स्नेहाभावे येन केन प्रकारेण प्राणांस्त्यक्ष्यामीत्युत्थानं रहस्यप्रकाशनाय ॥

एवमनयोः संवादे नायकस्य वितर्कः ॥

तदसहमाना नायिकाह—मा साहसं कुरु मरणोद्योगं मा कृथाः । एतच्छ्रुत्वा त्वमेव मां परित्यक्ष्यसीति युक्तरूपं निमित्तमिति प्रकाशितम् । अत्र विरुद्धैरविरुद्धैश्च व्यभिचारिभिर्नायकस्य रतिपरिपोषार्थमेवमितिवृत्तनिबन्धनम् ॥

करेहि । एदं सुणिअ तुमं एव्व मं परिच्चइस्सासि । ता सुणाहि एदं ।

चेटी— (क) अणुगहिदह्मि । (तया सहोपविशति)

धनञ्जयः—(सवितर्कम्) किन्नु खल्वेतत् परिणंस्यति ।

सुभद्रा—(ख) हळा! जम्मदप्पहुदि कण्णगोअरंगदेहि पत्थपरक्कमेहि असाहारणपरिग्गहिअं मे हिअअं अण्णस्स वि साहारणं करन्तेण मअणहदएण पण्णइत्थिआणं पदविं आरोविअह्मि ।

धनञ्जयः—(सोद्वेगम्) धिग् धिग्, विरुद्धशीले!

---

(क) अनुगृहीतास्मि ।

(ख) सखि! जन्मतः प्रभृति कर्णगोचरगतैः पार्थपराक्रमैरसाधारणपरिगृहीतं मे हृदयमन्यस्यापि साधारण कुर्वता मदनहतकेन पण्यस्त्रीणां पदवीमारोपितास्मि ।

---

जन्मतः प्रभृतीत्यादिना पराक्रमादीनां पार्थगुणानां चित्तवशीकरणे सामर्थ्यं प्रकाश्यते । जन्मतः प्रभृति, न त्विदानीमेव । यदा बोधोऽङ्कुरितस्तदारभ्य कर्णगोचरगतैः पराक्रमनैरन्तर्यात् तदा तदा तेन तेन कर्णामृतीकृतैः पार्थपराक्रमैः पराक्रमादिभिर्गुणैः । आदरार्थे बहुवचनम् । 'सप्तमी शौण्डैरि'(२.१.४०)त्यादिवत् । असाधारणपरिगृहीतम् इदमस्माकमेवास्तु नान्यसाधारणमिति गुणैस्तस्मिन्नेवाभिनिविष्टमित्यर्थः । अन्यस्यापीति सामान्यकथनं विशेषकथने लज्जया । तत एव नायकस्य वैराग्योदय । मदनहतकेनेति अनुचितप्रेरणेन कुत्सनीयत्वं प्रकाशितम् । आरोपितास्मीत्यनेनानिवर्तनीयत्वं च सूचितम् ॥

धिग् धिगित्यादि । अत्रान्तरे नायकस्य पुंश्चलीत्वबुद्ध्या रतिविरुद्धो निर्वेदभावस्ततो निवर्तनोपक्रमपर्यन्तं प्रकाशितः । वीप्सया कथन वैराग्यातिशयद्योतकम् । तत्र हेतुं प्रकाशयति – विरुद्धशीले इति । शीलं स्वभावः तस्य धर्मविरुद्धः

निष्यन्दमानविनयैरतिसौम्यकान्तैः
प्रख्यापयद्भिरभिजातिममीभिरङ्गैः ।
चारित्रलक्षणजुषः प्रतिपूरुषं ते
चेतश्चलच्चलयति प्रसभं मनो मे ॥ ११ ॥

अलमनया स्वकुलकलङ्कभूतया । तदमुतः स्थानादन्यत्र प्रतीक्षिष्ये सुभद्रान्वेषिणं कञ्चुकिनम् । (प्रस्थातुमिच्छति)

**चेटी**—(सकौतुकम्) (क) भट्टिदारिए! को णु खु सो पुरुसो ।

**सुभद्रा**—(ख) जेण अहं भूदहत्थादो परिरक्खिदह्मि ।

---

(क) भर्तृदारिके! को नु खलु स पुरुषः ।

(ख) येनाहं भूतहस्तात् परिरक्षितास्मि ।

---

स्वमाकृतिविरुद्धत्व वा विरोध. । तत्फलमाह-**निष्यन्दमानेत्यादि** । निष्यन्दमानः अविच्छिन्नमतिस्फुट प्रकाशमानः विनय येषु, यतः अतिसौम्यकान्तै. अत्यन्तानुरूपैः कान्तिमद्भिश्च । अत एवाभिजातिं प्रख्यापयद्भिः अभिजातिरभिजन्म, कुलीनेयमिति बुद्धिमापादयद्भिरित्यर्थः । अमीभिरिति । कियद्वर्ण्यते एषां लक्षणसामग्र्यम्, अनुभवगम्यमेवेत्यर्थः । चारित्र वृत्तशुद्धिः, अङ्गेषु प्रकाशमानपरिपूर्णचारित्रलक्षणाया इत्यर्थः । एतद् मनसः प्रवृत्तिहेतुः । प्रतिपूरुषं चलत् ते चेतः मे मनः प्रसभ चलयति झटिति निवर्तयति । अङ्गचातुर्यमनादृत्येति शेषः । अत्र चेतसः प्रतिपुरुषचलनं मनोनिवर्तनहेतु । अत्र चेतो मनश्चलयतीति प्रयोजकत्वकथनेन सजातीयस्नेहेन ममैव कलङ्को जातस्त्व निष्कलङ्कं निवर्तस्व पुंश्चलीमेनां विसृज्येति निवर्त्तयतीत्युत्प्रेक्ष्यते ॥ ११ ॥ अमुत स्थानादन्यत्रेति चैतत्सन्निधो स्थातुमपि न युक्तम् । अतः कालप्रतीक्षणमप्यन्यत्रैवेति प्रस्थानोद्यमेन निर्वेदस्य प्रकर्षः प्रकाशितः ॥

अनुचितश्रवणेऽपि सर्वथा निगूढ स्पष्टीभवतु । पुनर्वैपम्यनिरूपणामिति बुद्ध्या चेट्याः सकौतुक प्रश्नः—कः स पुरुष इति ॥

**धनञ्जयः**—(सहर्षम्) दिष्ट्या सोऽयमेव किलैको जनः पुरुषद्वय-
भ्रमहेतुरस्याः । मम खलु—

इमौ कर्णौ कर्णौ श्रुतिसुखनिविष्टेद्दशगिरा-
वमू दृष्टी दृष्टी सपदि परिपीताकृतिसुधे ।
अमून्यङ्गान्यङ्गान्यवशमपतद् येषु गगना-
दिदं चित्तं चित्तं वहति यदिमां वामनयनाम् ॥ १२ ॥

(विचिन्त्य) यदवाशिष्टमिदानीमस्याः प्रभवसमागमोपायौ चिन्तनीयावित्यत्र² कृत्ये सहायः स कौण्डिन्यश्चिरयति ।

(नेपथ्ये)

(क) अब्बह्मण्णं अब्बह्मण्णं ।

**धनञ्जयः**—(कर्णं दत्त्वा)कथं कौण्डिन्यः फूत्कुरुते । किन्नु खल्वस्य व्यसनमापतितम् ।

**सुभद्रा**—(ससम्भ्रमम्) (ख) को णु खु बह्मणं पीडेइ ।

---

(क) अब्रह्मण्यमब्रह्मण्यम् ।
(ख) को नु खलु ब्राह्मणं पीडयति ।

---

भूतहस्ताद् रक्षितेति विशेषश्रवणे आत्मविषयत्वं निश्चित्य निर्वेदमाक्रम्य रतिपरिपोषजनकं हर्षातिशयमवलम्बमान आत्मनः श्लाघ्यत्वं समर्थयति—**मम** खल्वित्यादिना । ममैव, नान्येषामेवमिन्द्रियसाफल्यम् । अत्र द्वितीयकर्णादि-शब्दाः सरसमधुरचतुरानुकूलशब्दश्रवणादिपात्रताविशेषसङ्क्रमितवाच्याः । हेतु-गर्भैर्विशेषणैस्तत्स्फुटीकरण कृत 'रइकिरणाणुग्गहिआ' इत्यादिवत् ॥ १२ ॥ अस्याः प्रभवसमागमोपायौ चिन्तनीयाविति यदवशिष्टम्, अत्र कृत्ये अस्मिन् कृत्ये कर्तव्ये इति सम्बन्धः ॥

---

१. 'सुखसु' क. ख. पाठ. २. 'नच कृ' ख. पाठ.. ३. 'आकर्ण्य' ख. पाठः.

**चेटी**—(विलोक्य)[1] (क) भट्टिदारिए! एसा कप्पलदिआ उत्तरीयवासपीडिअगळं णवबद्धं विअ वणवाणरं इदो तदो ओळ[2]म्बन्तं अणिच्छन्तं कं पि बह्मणं[3] आकड्ढअन्ती इदो एव्व आअच्छइ ।

(ततः प्रविशति यथानिर्दिष्टो विदूषकश्चेटी च)

**विदूषकः**—( )[4] अब्बह्मण्णं अब्बह्मण्णं ।

**चेटी**—(ग) एहि दुट्ठबह्मण! । (बलादाकर्षति)[6]

**धनञ्जयः**—हन्त पतितोऽयमीदृश्यामपदि वयस्यः । किमत्र प्रतिविधेयम् । अथवा धर्मोपरोधभयादियमेव साध्वी परिपालयिष्यति[7] ।

**सुभद्रा**—(सरोषं) (घ) हळा! कीस सव्वदसाअं पूअणीआणं बह्मणाणं सरीरोवरोहं करेसि ।

---

(क) भर्तृदारिके! एषा कल्पलतिकोत्तरीयवासःपीडितगलं नवबद्धमिव वनवानरमितस्ततोऽवलम्बमानमनिच्छन्तं कमपि ब्राह्मणमाकर्षन्तीत एवागच्छति ।

(ख) अब्रह्मण्यम् अब्रह्मण्यम् ।

(ग) एहि दुष्टब्राह्मण! ।

(घ) सखि! कस्मात् सर्वदशायां पूजनीयानां ब्राह्मणानां शरीरोपरोधं करोषि ।

---

सव्वदसाअं पूअणीआणमिति । सर्वदशायाम् अपराधेऽप्यनपराधेऽपि । पूजनीयानामिति जात्यपेक्षया बहुवचनम् । न त्वस्यैकस्यैव, ब्राह्मणानां सर्वेषामपि पूजनीयत्वमेव । तत् कथं शरीरोपरोधः क्रियते ॥

---

१. 'क्य) एसा' क. ख. पाठः. २. 'एद ळद च ओ' क. पाठः ३. 'बडुअ' ख. ग. पाठः. ४. 'पूर्वोक्तमेव पठति।' ख. पाठः ५ 'हवडुअ!' ख. ग. पाठ. ६. 'ति) सुभद्रा—(सरोषं) हळा! कीस सव्वदसाअं पूअणीआणं बह्मणाणं सरीरोवरोहं करेसि । ५' क. ख. पाठः. ७. 'ति । (सुभद्रा—हळा कीस इत्यादि पूर्ववत् पठति) कल्प' क. ख. पाठः

कल्पलतिका—(क) पसीददु पसीददु भट्टिदारिआ। इक्कणो एसो, ण बह्मणो।

सुभद्रा—(ख) हळा! किं णेण चोरिअं।

कल्पलतिका—(ग) भट्टिदारिए! इदं णेण चोरिअं। (तस्य कर्पटादादाय गात्रकां दर्शयति)

विदूषकः—(आत्मगतम्) (घ) अहो विहिणो पहावो, जो अहं कुम्भीळोत्ति सद्दमत्तं सुणिअ भएण[२] मरणसंसए वत्तामि, सो एव्व दाणिं अहं कुंभीळो णाम संवुत्तो। (प्रत्यक्षं कृपणम्) भोदि अदिबह्मण्णसीळे! मम वि वअणं सुणिअ पच्चा अक्खीणि मे अवहरिअव्वाणि।

सुभद्रा—(सस्मितम्) (ङ) बह्मण! अच्छउ[३] अक्खिवत्ता। कहेहि जहवुत्तं।

(क) प्रसीदतु प्रसीदतु भर्तृदारिका। चोर एषः, न ब्राह्मणः।

(ख) सखि! किमनेन चोरितम्।

(ग) भर्तृदारिके! इदमनेन चोरितम्।

(घ) अहो विधेः प्रभावः, योऽहं कुम्भील इति शब्दमात्रं श्रुत्वा भयेन मरणसंशये वर्ते, स एवेदानीमहं कुम्भीलो नाम संवृत्तः। भवति अतिब्रह्मण्यशीले! ममापि वचनं श्रुत्वा पश्चादक्षिणी मेऽपहर्तव्ये।

(ङ) ब्राह्मण! आस्तामक्षिवार्त्ता। कथय यथावृत्तम्।

तत्राह — इक्कणो एसो। इक्कणो इति देशीपदम्। चोर इत्यर्थः। न ब्राह्मण इति ब्राह्मण्यं चौर्येण निह्नुतमिति भावः॥

कुम्भील इति तस्करपर्यायः। 'कुम्भीलस्तस्करेऽपि चे'ति वचनात्॥

अच्छउ अक्खिवत्ता आस्तामक्षिवार्त्ता॥

१. 'भट्टिदारिए इ' ख. पाठ.. २. 'ए उण' क. पाठः. ३. 'दिज्जयि अ' क. 'चिट्ठदु दाव अ' ख. 'छिज्जउ अ' ग. पाठः.

**विदूषकः**—(सहर्षम्) (क) भोदि! वअणं विणा कहं कहइस्सं ।

**सुभद्रा**—(ख) कहं वअणं विणत्ति ।

**विदूषकः**—(ग) मुहसिरावेहवज्जेण विअ एदाए दिढबद्धगळस्स मे कहं वअणणिग्गमो ।

**सुभद्रा**—(सस्मितम्) (घ) बह्मण! किं अबद्धादो गळादो णिग्गदाणि एदाणि अक्खराणि। (कल्पलतिकामवलोक्य) हळा! मुञ्च णं ।

**कल्पलतिका**— (ङ) जं भट्टिदारिआ आणवेदि । (मुञ्चति)

**धनञ्जयः**[1]—(सहर्षम्) दिष्ट्या मुक्तः कौण्डिन्यः । अहो रूपानुरूपमस्याश्चेष्टितम् ।

**षट्पदिका**—(जनान्तिकम्) (च) कप्पलदिए! एदेण बह्मणेण एक्को ळाभो[2] उवणओ[3], जं पञ्चसरपरिपीडिआ एसा एदस्स असंबद्धप्पळावेहि किञ्चि रसन्तरे ओदिण्णा ।

**कल्पलतिका**— (छ) सुट्ठु तुए अवहारिअं ।

---

(क) भवति! वचनं विना कथ कथयिष्यामि ।

(ख) कथं वचन विनेति ।

(ग) मुखसिरावेधवज्रेणेवैतया दृढबद्धगलस्य मे कथ वचननिर्गमः ।

(घ) ब्राह्मण! किमबद्धाद्गलान्निर्गतान्येतान्यक्षराणि । सखि! मुञ्चैनम् ।

(ङ) यद् भर्तृदारिकाज्ञापयति ।

(च) कल्पलतिके! एतेन ब्राह्मणेनैको लाभ उपनतः, यत् पञ्चशरपरिपीडितैषा एतस्यासम्बद्धप्रलापैः किञ्चिद् रसान्तरेऽवतीर्णा ।

(छ) सुष्ठु त्वयावधारितम् ।

---

१. 'थः–दि' क. ख. पाठः. २. 'ह्यो' ख. ग. पाठ. ३. 'दो' ग. पाठः.

**विदूषकः**—(कण्ठ संवादयन्) (क) सुणादु अत्तहोदी । अहं तित्थ-[2]जत्ताकामुअस्स कस्स वि परमहंसस्स जोअसम्भार-वाहओ वडुओ। सो अहं हिज्जो पहासतित्थणिअडतवो-वणे भिक्खं अडन्तो समावुत्तिअ एदं देक्खिअ गेह्णिअ आअ[3]दोह्मि। अज्ज उण एदस्सिं णअरे तं भअवन्तं अण्णे-सअन्तो एदाए हत्थे पडिदोह्मि । अदो वरं अत्तहोदी एव्व पमाणं ।

**सुभद्रा**—(ख) जुज्जइ । (विदूषकमपवार्य) कप्पळदिए! जाणिदो गत्तिआए आगमो । सो दाणिं कहिं ।

**कल्पलतिका**—(ग) भट्टिदारिए! दाणिं मए ण सो दिट्ठो ।

**सुभद्रा**—(स्वगतम्) (घ) कहिं णु खु सो गओ भवे ।

---

(क) श्रृणोत्वत्रभवती। अहं तीर्थयात्राकामुकस्य कस्यापि परमहंसस्य योगसम्भारवाहको वटुकः। सोऽहं ह्यः प्रभासतीर्थनिकटतपोवने भिक्षामटन् समावृत्यैतद् दृष्ट्वा गृहीत्वागतोऽस्मि । अद्य पुनरेतास्मिन् नगरे तं भगवन्तमन्विष्यन् एतस्या हस्ते पतितोऽस्मि । अतः परमत्रभवत्येव प्रमाणम् ।

(ख) युज्यते । कल्पलतिके! ज्ञातो गात्रिकाया आगमः । स इदानीं क्व ।

(ग) भर्तृदारिके! इदानीं मया न स दृष्ट. ।

(घ) क्व नु खलु स गतो भवेत् ।

---

जाणिदो गत्तिआए आगमो । स इदानीं केति । उभयार्थ पूर्वमस्या विसर्जनम् । तत्र गात्रिकावृत्तान्तः सिद्धः । मूतहस्ताद् रक्षितारमुद्दिश्य रहसि प्रक्रान्तत्वेन स इति निर्देशः ॥

---

१. 'ह' ख. ग पाठ. २. 'अ' ग पाठः. ३. 'दो। अ' ग. पाठः. ४. 'ए। ण मए सो' ग. पाठ. ५. 'द्रा—क' ग पाठः.

**धनञ्जयः** — कथं स इति ।

**पट्पदिका** — (क) भट्टिदारिए ! को अण्णेसिओ पुरुसो ।

**सुभद्रा** — (निःश्वस्य) (ख) जेणं अहं भूदहत्थादो परिरक्खिदा ।

**धनञ्जयः** — (सप्रमोदम्) क्षणादहं दुःखगर्ते पतितोत्तीर्णः ।

(प्रविश्य)

**काञ्चुकीयः** — भर्तृदारिके सुभद्रे ! आहतुरत्वां भ्रातरौ सङ्कर्षण वासुदेवौ ।

**धनञ्जयः** — (सप्रमोदं सपुलकोद्गम च) भगवन् ! विधे ! इयन्तं काल मपकुर्वन्नपि मम—

---

(क) भर्तृदारिके! कोऽन्विष्टः पुरुष. ।
(ख) येनाह भूतहस्तात् परिरक्षिता ।

---

निकटवर्त्तितया तच्छ्रुत्वा कोऽयमन्विष्यत इति नायकस्य विषादः—कः स इति । अनुभूतपूर्वं प्रक्रान्तं वा प्रति प्रश्नः कथं घटते इति भावान्तरोद्भावनम् । पुनः प्रश्नप्रतिवचनाभ्यां रतिपरिपोषः ॥

कोऽन्विष्टः पुरुष इति प्रश्नः ॥

येनाहं भूतहस्तात् परिरक्षितेत्युत्तरकथनम् ॥

तच्छ्रुत्वान्यथाभ्रमेणापि स्वयमेव परिगृहीत इति नायकस्य प्रहर्षः । विदूषकमपवार्यैतद्वचनं नाट्यधर्मिन्यायेन ॥

अथ व्यभिचारिपरम्परया परिपोषं गतस्य नायकरतिभावस्य भेदभ्रमापनोदनेन परकाष्ठां प्रकाशयितु सुभद्राह्वानपुरस्सर कञ्चुकिप्रवेशः ॥

अथ भेदभ्रम निरस्य सुभद्रां प्रति निविष्टचित्तो दैवानुवर्त्तनेन कृतार्थता प्रकाशयति — **भगवन् विधे !** इत्यादिना । इयन्तं कालमपकुर्वन्नपीति । भ्रमे

---

१. 'जो पुव्व मए कहिदो भूदहत्थादो म परिरक्खिदत्ति' इति मूलकोशपाठ ..

तां प्रियां प्रमथपाणिपीडितां
पीवरस्तननिबद्धवेपथुम् ।
मुक्तमत्सरमिमां च माधवी-
मेकयन्नुपगतोऽसि बन्धुताम् ॥ १३ ॥

**विदूषकः**—(स्वगतम्) (क) दिट्ठिआ एसा सुहद्दा । थाणे खु वअस्सस्स अहिणिवेसो ।

**सुभद्रा**—(सबहुमानम्) (ख) अय्य! किं अय्येहि आणत्तं ।

**काञ्चुकीयः**—भर्तृदारिके! एवमिव ।

**सुभद्रा**—(सबहुमानम्) (ग) कहिं पुण दे भअवन्तो ।

**काञ्चुकीयः**—एष प्रवेशयामि । (परिक्रामति)

**धनञ्जयः**—असौ मामन्वेष्टुमायाति । तद् यथास्थाने तिष्ठामि ।

---

(क) दिष्ट्यैषा सुभद्रा । स्थाने खलु वयस्यस्याभिनिवेशः ।

(ख) आर्य! किमार्याभ्यामाज्ञप्तम् ।

(ग) क्व पुनस्ते भगवन्तः ।

---

त्पादनेनौत्सुक्यवितर्कविषादचिन्तानिर्वेदहर्षादिविरुद्धभावोत्पादनेन पीडां जनयन् शत्रुवदापादयन्नपीदानीं **प्रमथपाणिपीडितां** पीवरस्तननिबद्धवेपथुं सर्वाङ्गावबद्धवेपथुमपि गौरवेण स्तनयोरतिप्रकाशप्रकम्पामिति पीवरस्तननिबद्धवेपथुमित्युक्तम् । ताम् अनुभूतभयसम्भ्रमां भ्रमेण पृथग्बुद्ध्युपारूढाम् इमां च माधवीं पूर्वमेवास्मत्परिग्रहोचितां मुक्तमत्सरम् अयं भेदभ्रमेण पीडामनुभवत्वितीपत्परिगृहीतं मत्सरं परित्यज्यैकयन् कान्ताद्वयपरिभ्रमहेतुरियमेकैवेति बोधयन् बन्धुतामुपगतः मित्रभावं प्राप्तः । अपकारोपकारौ हि वैरिमित्रयोर्लक्षणम् । अतः स्वातन्त्र्येण पूर्वमपकुर्वन्निदानीं मित्रतां प्राप्तः ॥ १३ ॥

सुभद्रा —(क) हला छप्पदिए! तुवारेहि एदाणं पूओवअरणाणि।
पट्पदिका – (ख) जं भट्टिदारिआ आणवेदि। (निष्क्रम्य प्रविश्य) भट्टिदारिए! किदं जहाणत्तं।
काञ्चुकीयः — (उपसृत्य सप्रणामम्) भगवन्! एषा माधवी माधवीलतागृहमध्यास्ते। सा भगवद्दृष्टिपातेन पावनीक्रियताम्।
धनञ्जयः[2] —बाढम्। प्रथमः कल्पः। आदिश्यतां मार्गः।
काञ्चुकीयः[3]—भगवन्नितइतः। (परिक्रम्योपसर्पति)
सुभद्रा—(ससम्भ्रममुत्तिष्ठन्ती स्वगतम्) (ग) अम्मो ण एसो परमहंसो[4],

(क) सखि! षट्पदिके! त्वरयैतेषा पूजोपकरणानि।
(ख) यद् भर्तृदारिकाज्ञापयति। भर्तृदारिके! कृत यथाज्ञतम्।
(ग) अम्मो नैष परमहस। मन्ये मनसिज परिगृहीतवेषान्तरो मा पीडयितुमुप-

तुवारेहि त्वरय, शीघ्र सम्पादयेत्यर्थ ॥

अथ वेषान्तरेण नायकस्य दर्शने नायिकाया रतिभाव पूर्वं गुणश्रवणेन धनञ्जय प्रति परिपोष गत पुनस्तस्यैव भूतहस्तरक्षणेऽन्यत्वभ्रमेण द्विशाखतया व्याप्त तस्यैव यतिवेषेण दर्शनेऽन्यथाप्रतीत्या त्रिशाखत्वेन प्रसृतम् उद्बन्धपर्यन्त व्यभिचारिपरम्पराया दत्तपद परिपोष नेतु पुनरेकत्वनिश्चये 'मम हिअआवहारिणो दइओ धणञ्जओ एव्व सवुत्तो' इति परकाष्ठाया परमानन्दविश्रान्ति प्रकाशयितु भ्रमान्तरमुद्भावयति। हृदयस्य सर्वत्र तत्त्वानुसरणप्रवृत्तत्वान्मनस सङ्कल्पविकल्पपरत्वाच्चेकत्वेऽप्यनेकधा भ्रमो घटते। अम्मो इत्यादि। नैष परमहस। मन्ये मनसिजो मा पीडयितु परिगृहीतवेषान्तर आगत इति। मन्ये अस्य रूपचातुर्यातिशयेन पीडाजनकत्वेन च कल्पयामि। महतॄणामेष स्वभाव, छलेनाशङ्कनीय

१ 'कप्पळदिए' ख पाठ २ य प्र' ख पाठ ३ य — इत ख पाठ ४ सो। सो म' क पाठ

मण्णे मणसिओ परिगहिअवेसन्तरो मं पीडेदुं उवट्ठिओ। अण्णं च दिट्ठमत्तेण एव्व परवसीकिदाणि[1] मे अङ्गाणि[2]। कहं एदस्स उवआरं पडिवज्जिस्सं। (साध्वसकम्पिताभ्यां कराभ्यामञ्जलिं बध्नाति) (सगद्गदम्) भअवं! वन्दामि।

**धनञ्जयः**—भद्रे! अभिमतभर्तृभागिनी भूयाः।

**सुभद्रा**—(दीर्घं निःश्वस्य स्वगतम्) (क) मम दाव मन्दभाआए वल्लहत्तअं अहिमदं। न कुळइत्थिआणं एसो समुदाआरो। ता एदस्सि जम्मे ण संभावणीआ एसा आसी।

**काञ्चुकीयः**—भर्तृदारिके! अनुष्ठितं शासनं देवयोर्विज्ञापयामि।

**सुभद्रा**—(ख) अय्य! एव्वं।

(काञ्चुकीयो निष्क्रान्तः)

---

स्थितः। अन्यच्च दृष्टमात्रेणैव परवशीकृतानि मेऽङ्गानि। कथमेतस्योपचारं प्रतिपत्स्ये। भगवन्! वन्दे।

(क) मम तावद् मन्दभागाया वल्लभत्वमभिमतम्। न कुलस्त्रीणामेष समुदाचारः। तदेतस्मिन् जन्मनि न सम्भावनीयैषाशी।

(ख) आर्य! एवम्।

---

वेषमवलम्ब्य पीडनोद्यमः। अत एव परमहंसवेषमवलम्ब्यागतः। दृष्टमात्रेण व्यवहारस्पर्शनादिना विना परवशीकृतान्यङ्गानि स्वस्वकर्मासमर्थानि कृतानि। कथमुपचारं प्रतिपत्स्ये अभ्युत्थानपादप्रक्षालनादिकं करोमि। अनेन वैवश्यातिशयः प्रकाश्यते॥

**ण सम्भावणीआ** इति। न सभावनीयैषाशी सफलत्वेन कल्पयितुं न शक्या॥

---

१ 'इ' ग पाठः २ 'इ' ग पाठः ३ 'साग्रग' ग पाठः

**विदूषकः**—(सहर्षं स्वगतम्) (क) दिट्ठिआ अवमुच्चुमुहादो कहं वि परिब्भट्ठेण मए दिट्ठो वअस्सो। तक्केमि इदो वरं करगअं अविग्घेण वरिससदजीवणं।

**षट्पदिका**—(जनान्तिकम्) (ख) हळा कप्पळदिए! देक्खे जदिसमअविरोहीणि एदस्स चेट्ठिदाइ।

**कल्पलतिका**—(ग) सुट्ठु तुए अवहारिअं। एदाए भट्टिदारिआए एदस्स दंसणेण विउणिओ विअ पञ्चसरपरक्कमो।

**सुभद्रा**—(घ) भअवं! सणाहीकिज्जउ एदं आसणं।

**धनञ्जयः**[2]—बाढम्। (उपविशति)

**षट्पदिका**—(ङ) भट्टिदारिए! संपादिज्जउ एदाणं पूआ।

---

(क) दिष्ट्यापमृत्युमुखात् कथमपि परिभ्रष्टेन मया दृष्टो वयस्यः। तर्कयामीतः परं करगतमविघ्नेन वर्षशतजीवनम्।

(ख) सखि कल्पलतिके! पश्य यतिसमयविरोधीन्येतस्य चेष्टितानि।

(ग) सुष्ठु त्वयावधारितम्। एतस्या भर्तृदारिकाया एतस्य दर्शनेन द्विगुणित इव पञ्चशरपराक्रमः।

(घ) भगवन्! सनाथीक्रियतामिदमासनम्।

(ङ) भर्तृदारिके! सम्पाद्यतामेतेषा पूजा।

---

**यतिसमयविरोधीनि** चेष्टितानि कटाक्षपातादीनि। यतीनां नैरपेक्ष्यं भूषणम्, अस्यातीव सापेक्षत्व दृश्यत इति विरोधः॥

**एतस्या** भर्तृदारिकाया एतद्दर्शनेन पञ्चशरपराक्रमो द्विगुणितः, पराक्रमस्य फलं वैवश्यमतीव दृश्यत इत्यर्थः। अनेनोभयोः परस्परानुरागवैवश्य चेटीभ्यां निश्चितमिति प्रकाशितम्॥

---

१. 'क्स स' ग. पाठ. २. 'य उ' क. ख. पाठ.

**धनञ्जयः**----(स्वगतम्) अहोतुखल्वकालज्ञा षट्पदिका, यदिमां मनोभवातङ्कातरामीदृशे कर्मणि नियुङ्क्ते ।

**सुभद्रा**----(स्वगतम्) (क) किं करोमि मन्दभाइणी । (प्रत्यक्षम्) हळा ! उवणेहि पादोदअं ।

**षट्पदिका**---- (ख) ऐदं ।. (उपनयति)

(सुभद्रा साध्वसकम्पिताभ्या कराभ्या कथञ्चित् पाद्प्रक्षालनं करोति)

**धनञ्जयः**---- (सरोमाञ्च स्वगतम्)

मम हि रागमिमावतिकोमलावरुणयोस्तलयोरतिपेशलम् ।
चरणयोर्निहितौ करपल्लवौ मनसि चित्रममुत्र निषिञ्चतः ॥१४॥

---

(क) किं करोमि मन्दभागिनी । सखि ! उपनय पादोदकम् ।
(ख) एतत् ।

---

मम हीत्यादि । तत्करस्पर्शेन समुन्मिषितरतिभाव आत्मनो रागानुबन्ध भङ्गया प्रकाशयति । मम चरणयोर्निहितौ प्रक्षालनार्थमनया न्यस्तौ करपल्लवौ तलयोरतिपेशलं रागममुत्र मनसि निषिञ्चत. । अत्र चरणयोर्निहितावतिकोमलौ करपल्लवावित्युक्त्या करतलयोरेव ग्रहणम् । अतस्तलयोरिति न घटते ।अथ तत्रापि राहोः शिर इतिवद् भेदकल्पने अरुणयोरिति नापेक्षितं, रागशब्दार्थस्यारुण्ये नियतत्वात् । रागं मनसि निषिञ्चत इत्युक्तौ अनुरागार्थस्तिरोहित इति वैषम्यम् । अतः अरुणयोस्तलयोरतिपेशल रागं परिपूर्णतयान्यत्रावापयोग्यं मनस्यमूर्ते निषिञ्चतः । अत्रान्यत्र रागाप्लुतकरन्यासः अन्यत्र रागनिषेक इत्यसङ्गतिप्रकाशनेन चित्रत्वम् । लाक्षारसानुरागयोश्च श्लेष इति निर्वाह. । एतत्स्पर्शनेन मम चित्तेऽनुरागः परिपोष गत इति तात्पर्यम् । अस्मिन् प्रकरणे

"तत्रायोगोऽनुरागेऽपि नवयोरेकचित्तयोः ।
पारतन्त्र्येण दैवाद् वा विप्रकर्षादसङ्गम. ॥"

---

१. 'इ' ख पाठः. २ 'मोद्गम च स्व' क. पाठः. .

**सुभद्रा** — (क) हला ! उवणेहि अग्घं ।

**षट्पदिका** — (ख) एदं । (उपनयति)

**कल्पलतिका** — (विलोक्य) (ग) अहो पमादो भट्टिदारिआए । एदं पब्भट्ठं अग्घभाअणं ।

**धनञ्जयः** — अलमिदानीमतिकोमलान्यङ्गान्यायासे निक्षिप्य । पुरस्कृतोऽस्मि । स्वैरमास्तामत्रभवती ।

**सुभद्रा** — (सलज्ज स्वगतम्) (घ) अम्मो तुलिअह्मि एदेहि ।

**विदूषकः**[1] — (ङ) एसो वि चोरो एदाणं भअवदाणं सिस्सदाए किं वि[2] पूअणीओ ।

**सुभद्रा** — (स्वगतम्) (च) अम्मो एदस्स एसो, अणवरद्धो[3] दाणिं । (प्रत्यक्ष कल्पलतिकामुद्दिश्य) हला ! इमं वि पूएहि ।

(क) सखि ! उपनयार्घ्यम् ।
(ख) एतत् ।
(ग) अहो प्रमादो भर्तृदारिकाया । एतत् प्रभ्रष्टमर्घ्यभाजनम् ।
(घ) अम्मो तुलितास्म्येताभ्याम् ।
(ङ) एषोऽपि चोर एतेषा भगवता शिष्यतया किमपि पूजनीय ।
(च) अम्मो एतस्यैष, अनपराद्ध इदानीम् । सखि ! इममपि पूजय ।

इत्ययोगविप्रलम्भस्य परिपोषे वर्णनीये नायिकाया एकस्यैव क्रमेण त्रिधा कल्पितस्य सङ्कल्पपरम्परया चिन्तास्मृतिविषादादिपरिबृंहितस्य अर्घपात्रपतनादिना स्फुटीकृतवैवश्यस्य भिक्षासम्पादनार्थं परिवृत्यावलोकने गर्भितभावसर्वस्वस्य उद्बन्धनोपक्रम यावत् तृतीयाङ्के परिपोष प्रकाशयिष्यते । नायकस्य तु एकत्वे निश्चितेऽप्युपरि वैवश्येन परिचरण निर्वोढु तस्यामसमर्थाया दर्शनाभावेन विप्रलम्भस्य परिपोष उपरि वर्णयिष्यत इति विशेष ॥ १४ ॥

१ क—ओ ए ग पाठ  २ 'चि' क पाठ  ३ 'ज्झा' ख पाठ  ४ क्ष) इ'.क पाठ

**विदूषकः**---(क) जइ किदो ववसाओ, इमाए[1] सग्गरुक्खिआए हत्थे मं णिक्खेवं करेहि।

**कल्पलतिका**— (सस्मित) (ख) णामहेअपण्डिद ! जदा एदाणं भअवन्दाणं सिस्सोत्ति जाणिदोसि, तदप्पहुदि किदक्खेमं दे सरीरं।

**विदूषकः**--- (ग) जीवाविदोह्मि। अदिसुहिआ होदु अत्तहोदी।

**सुभद्रा**—(स्वगतम्) (घ) अम्मो एदस्स पुरदो खणं वि ण ठ्ठादुं पारेमि। ता एव्वं करिस्सं[2]। (प्रत्यक्षम्) हळा[3] छप्पदिए! एहि। कप्पळदिए! एहि। एदाणं भअवन्दाणं भिक्खं संपादेह्म। (सप्रणाम परावृत्यावलोकयन्ती सह सखीभ्या निष्क्रान्ता)

**विदूषकः**--(ङ) भो केण दाणिं मूढेण पाडच्चरो भण्डाआररक्खाहिआरं ळंभिओ।

**धनञ्जयः**---(सस्मितम्) स्वयं सङ्कर्षणवासुदेवाभ्याम्।

**विदूषकः**--(च) कहं पुण तुएँ उवक्कन्तं।

**धनञ्जयः**—— एवमिव।

---

(क) यदि कृतो व्यवसाय , अस्या स्वर्गवृक्षिकाया हस्ते मा निक्षेप कुरु।

(ख) नामधेयपण्डित! यदैतेषा भगवता शिष्य इति ज्ञातोऽसि, तदाप्रभृति कृतक्षेम ते शरीरम्।

(ग) जीवितोऽस्मि। अतिसुखिता भवत्वत्रभवती।

(घ) अम्मो एतस्य पुरत क्षणमपि न स्थातु पारयामि। तदेव करिष्यामि। सखि पट्पदिके! एहि। कल्पलतिके! एहि। एतेषा भगवता भिक्षा सम्पादयाम।

(ङ) भो केनेदानीं मूढेन पाटच्चरो भाण्डागाररक्षाधिकारे लम्भित।

(च) कथ पुनस्त्वयोपक्रान्तम्।

---

१ 'एदाए' क पाठ २. 'पव्विज्जिस्सम्' क पाठ ३ 'ला एदा' क ख पाठ
४ 'ए एव्व उ' ग पाठ

विदूषकः -- (क) जुज्जइ। चिट्ठदु एदं। तत्तहोदी सुहद्दा तुह णीदीए अणुदिणं दिट्ठिगोअरे पडिआ। अण्णा उण आ-आसइत्थिआ[1] किं आआसइत्थिआ एव्व संवुत्ता।

धनञ्जयः — सखे! मा मैवम्। इयमेव सुभद्रा तेन प्रमथेन प्रमथ्य नीता।

विदूषकः -- (विहस्य) (ख) सा दाव दाणिं सुहद्दा[2] सवुंत्ता[3], कदाइ जण्णसेणी भवे।

धनञ्जयः -- वयस्य! अद्यापि द्विधाभूतैव[4] मे प्राणेश्वरी। कुतः—

तिष्ठति सततं हृदये
बद्धा प्रेमप्रबन्धपाशेन।
स्तनभरविनमन्मध्या
चलति च दयिता पुरस्तान्मे॥ १५॥

(क) युज्यते। तिष्ठत्वेतत्। तत्रभवती सुभद्रा तव नीत्यानुदिनं दृष्टिगोचरे पतिता। अन्या पुनराकाशस्त्री किमाकाशस्त्र्येव सवृत्ता।

(ख) सा तावदिदानीं सुभद्रा सवृत्ता, कदाचिद् याज्ञसेनी भवेत्।

तिष्ठतीत्यादि। प्रेमप्रबन्धपाशेन बद्धा हृदये तिष्ठति, सङ्कल्पशरीरेणेत्यर्थः। प्रेमप्रबन्धस्य पाशत्वारोपेण प्रियतमासङ्कल्पस्यान्तरा विजातीयप्रत्ययातिरस्कार. प्रकाश्यते। अत एव बद्धेत्युक्तम्। स्तनभरविनमन्मध्या चलति चेति बहिः साक्षाद्रूपदर्शनानुभवः प्रकाशित। चलति वैवश्येनासमञ्जस गच्छति। एव द्विधात्व समर्थितम्। तिष्ठति गच्छतीति क्रियाभेदश्च द्विधात्वस्फुटीकरणाय॥ १५॥

१. 'आआ' ख पाठ. २. 'भ' ख पाठ ३ 'सा सुइद्दा क' क. पाठ, 'एसा वि सुहद्दा क' ग. पाठ ४. 'ते' क ख. पाठ.

**विदूषकः**—(ऊर्ध्वमवलोक्य) (क) भो वअस्स! चिट्ठदु एदं। उट्ठेहि उट्ठेहि। एसो भअवो [1]पहाअरो णहोमज्झं आरूढो। ता ह्णाणं करेह्म[2]।

**धनञ्जयः**—बाढम्। (उत्थाय परिक्रामन्नग्रतो विलोक्य) अहो जलविहङ्गमानपि जडयति मध्यन्दिननिदाघावलेपः। तथा ह्यस्यां—

वाप्यामाप्यायितास्यः कमलमधुजलैर्जालपादो विषीद-
न्नार्द्रीकृत्योपयुङ्क्ते रविकिरणपरिक्लिष्टमिष्टं मृणालम्।

---

(क) भो वयस्य! तिष्ठत्वेतत्। उत्तिष्ठोत्तिष्ठ। एष भगवान् प्रभाकरो नभोमध्यमारूढः। तत् स्नानं कुर्वः।

---

अथैकदिनप्रयोज्यावसानेऽङ्कसमाप्तिप्रकाशनाय कालवर्णनोपक्रमः—**जलविहङ्गमानपीत्यादि**। नित्य जलवासेन निरन्तरशैत्यानुभवानपीत्यर्थ.। हंसचक्रवाकादीन् जडयति उष्णगौरवेण विवशान् करोतीत्येवमत्र जाड्यम्। मध्यन्दिननिदाघावलेपः मध्याह्नातपप्रचण्डता। **वाप्यामित्यादि**। जालपादो हसः वाप्यां वर्तमानः मृणाल स्वय वापीजलेन सिक्तमुखः कमलमधुजलैरार्द्रीकृत्योपयुङ्क्ते, न पूर्ववत् छेदसमय एव भक्षयति। अत्र हेतु—रविकिरणपरिक्लिष्ट रविकिरणैः अतितापवैवर्ण्यादि(?)म्लानम्। एतदार्द्रीकरणे हेतु। इष्टमिति क्लिष्टत्वेऽप्यपरित्याज्यत्वे हेतुः। अत्र निदाघावलेपेन चञ्च्वोरभिताप मृणालस्योष्णतावैवर्ण्यादिकं (च) सिद्धम्। पुनरपरत्र चक्रवाको दक्षिणां पक्षपालीमातपनिवारणायोपरिच्छत्रीकृत्य प्रयच्छन् विक्षेपवत्या निरन्तरपवनवत्या वामया पक्षपाल्या वीजयन् दयितां सुखयति। चक्रवाकः स्वतापमगणयन् दयितां रमयतीत्यनेन भोगप्रवणस्य मिथुनस्य

---

१. 'वय) एसो' ख. पाठ   २ 'र' क ग पाठ

वीजन् विक्षेपचल्या सुखयति दयितां वामया चक्रवाकै-[2]
श्छत्रीकृत्य प्रयच्छन् प्रणयपरवशो दक्षिणां पक्षपालीम् ॥ १६॥
तदावामपि प्रकृतं प्रतिपद्यावहे ।

(निष्क्रान्तौ)

इति द्वितीयोऽङ्कः।

---

दर्शने भोगौत्सुक्यं व्यञ्जयन्नुत्तराङ्के वर्णयिष्यमाणस्यादर्शनप्ररूढस्यायोगाविप्रल-म्भस्य व्यतिरेकमुखेनोत्थान सूचयति ॥ १६ ॥

इति विचारतिलकनाम्नि सुभद्राधनञ्जयव्याख्याने

द्वितीयोऽङ्कः ।

---

१. 'रमय' ख पाठ २. 'कश्चकीकृ' क पाठ

## अथ तृतीयोऽङ्कः ।

(ततः प्रविशति चेटी)

चेटी --- (क) आणत्तह्मि भट्टिणीपादेहि --- हळा गोवद्धणिए ! एसु दिअसेसु अदिक्खामगत्तळट्ठी दूसहसन्दावदूमिआ अण-हिणं[1]दिआहारा वच्छा मे सुहद्दा दीसइ । कण्णआणं कि-ळ देवदा इन्दाणी । तं पूआविअ णिआहरणाणं पहाणभूदं एक्कं भूसणं संपण्णाअ बह्मणाअ दावेहित्ति । मए वि सव्वं[2] भट्टिदारिआए णिवेदिअं । ताए वि सव्वं करिअ कञ्चुईअस्य हत्थे बह्मणणिमित्तं हारो पेसिदो । ता अ-णुट्ठिअणिओअं अत्ताणं भट्टिणीपादाणं णिवेदइस्सं[3] । (परिक्रामति)

---

(क) आज्ञप्तास्मि भट्टिनीपादैः —सखि गोवर्धनिके ! एषु दिवसेष्वतिक्षामगात्र-यष्टि दुस्सहसन्तापदूनानभिनन्दिताहारा वत्सा मे सुभद्रा दृश्यते । कन्यकाना किल देवतेन्द्राणी । ता पूजयित्वा निजाभरणाना प्रधानभूतमेक भूषण सम्पन्नाय ब्राह्मणाय दापयेति । मयापि सर्व भर्तृदारिकायै निवेदितम् । तयापि सर्व कृत्वा काञ्चुकीयस्य हस्ते ब्राह्मणनिमित्त हार प्रेषित । तद-नुष्ठितनियोगमात्मान भट्टिनीपादाना निवेदयिष्यामि ।

---

अथ तृतीयाङ्के नायकयोरयोगविप्रलम्भस्य परिपोष वर्णयितु प्रवेशकेना-न्तरा प्रमेयसङ्घटनाय सूच्यमर्थं 'नीरसोऽनुचितस्तत्र ससूच्यो वस्तुविस्तर' इति लक्षणानुसारेण चेटीभ्या प्रकाशयति — आज्ञप्तास्मि भट्टिनीपादै । पादशब्द-पूज्यताप्रतिपादक । सर्वपूज्यया भर्तृदारिकाया मात्रा आजप्तास्मीत्याज्ञालाभेन कृतार्थतया तत्प्रकारवर्णनम् । हला गोवर्द्धनिके ! एषु दिवसेष्वतिक्षामगात्रयष्टिर्दुस्स-

---

१ 'भि' क पाठ  २ 'एद भ' मूलकोशपाठ  ३ 'स्स । (त' ख पाठ

(ततः प्रविशति द्वितीया चेटी)

**द्वितीया**—(क) आणत्तह्मि देवीए रुप्पिणीए । जह—हञ्जे ळवङ्गिए ! आणत्तह्मि अहं सस्सुपादेहि 'अज्ज अक्खमा पुत्ती मे सुभद्दा तेसं भअवन्दाणं भिक्खं संपादेदुं । ताए भारं तुवं ओळम्बेहि'त्ति । ता तुवं गदुअ सुहद्दाए कहे-

---

(क) आज्ञप्तास्मि देव्या रुक्मिण्या । यथा—सखि लवङ्गिके! आज्ञप्तास्म्यहं श्वश्रूपादैः 'अद्याक्षमा पुत्री मे सुभद्रा तेषां भगवतां भिक्षां सम्पादयितुम् ।

---

हसन्तापदूनानभिनन्दिताहारा वत्सा मे सुभद्रा दृश्यते। एषु दिवसेषु बुद्ध्युपारूढतया वर्तमानेषु परिमितेषु दिवसेषु । अनेनाल्पकालेन सन्तापस्य प्रवृद्धत्वाच्छमनोपाये त्वरा प्रकाशिता । अत एव प्रायश्चित्तं विदधाति—कन्यकानां किल देवतेन्द्राणी । तां पूजयित्वा निजाभरणानां प्रधानभूतमेकं भूषणं सम्पन्नाय ब्राह्मणाय दापय । किलेत्यागमप्रसिद्धिमनुस्मृत्योक्तिः । कन्यकानां सर्वासां योगक्षेमाय कुलदेवतात्वेन परिग्राह्या । अतस्तत्पूजनेन सन्तापोपशमो भवेदिति भावः । इन्द्राणीपूजां तया कारयित्वा पुनरपि व्यसनोपशमनार्थं निजाभरणानामेकं धार्यमाणानामाभरणानां मध्ये प्रधानभूतं महामूल्यं भूषणं सम्पन्नाय मुख्याय ब्राह्मणाय दापय । तयेति शेषः । मयापि सर्वं भर्तृदारिकायै निवेदितम् इन्द्राणीपूजा क्रियतां प्रधानभूतमाभरणं ब्राह्मणाय देहीति मातृनियोगो विज्ञापितः । तयापि सर्वं कृत्वा यथोक्तमिन्द्राणीपूजादिकं कृत्वा ब्राह्मणनिमित्तं ब्राह्मणाय दातुं काञ्चुकीयस्य हस्ते हारः प्रेषितः त्वमिमं हारमाभरणभाजनादुद्धृत्य मुख्याय ब्राह्मणाय देहि मन्नियोगेनेति तस्य हस्ते समर्पित इत्यर्थः । तदनुष्ठितनियोगमात्मानं भट्टिनीपादानां निवेदयिष्यामि यथोक्तमनुष्ठितमिति बोधयिष्यामीत्यर्थः ॥

अथ 'सदृशाभ्यां प्रयोज्यः स्यादङ्कसन्धौ प्रवेशक' इति लक्षणानुसारेण द्वितीयचेटीप्रवेशः । प्रविष्टा साज्ञालाभेन कृतार्था नियोगप्रकारं वर्णयति—आज्ञप्तास्म्यहं देव्या रुक्मिण्या । यथा । यथेति तस्या नियोगमात्मानं प्रति श्वश्रू-

---

१. 'दिठ्ठि' ग. पाठः. २. 'हृदा दीसइ ते' ख. ग. पाठः.

हि मा अत्ताणं आआसेहि । अज्जप्पहुदि तुए कादव्वं तेसं अहं करिस्सं त्ति । ता कहिंणुखु भट्टिदारिआ । (अग्रतो विलोक्य) एसा गोवद्धणिआ कण्णाउरादो णिक्कमदि । एदं पुच्छिस्सं । (उपसृत्य) सहि ! कहिं भट्टिदारिओ वट्टइ ।

**प्रथमा**—(क) अम्मो ळवङ्गिआ । सहि ! कञ्चणकमळवापिआतीरगए सहआरळदामण्डवे चिट्ठइ ।

**द्वितीया**—(सर्वतो विलोक्य) (ख) चिट्ठदु एदं । अण्णं किं वि रहस्सं पुच्छिस्सं । कीस एदं उवहदसोहं कण्णाउरं दीसइ । केण वा एक्कहत्थपळ्ळत्थकवोळमूळाहिं इदोतदो णिसण्णा-

---

तस्या भारं त्वमवलम्बस्वे'ति । तत् त्वं गत्वा सुभद्रायै कथय मात्मानमायासय । अद्यप्रभृति त्वया कर्तव्य तेषामहं करिष्यामीति । तत् क्नुखलु भर्तृदारिका । एषा गोवर्धनिका कन्यापुरान्निष्क्रामति । एतां प्रक्ष्यामि । सखि ! क्व भर्तृदारिका वर्तते ।

(क) अम्मो लवङ्गिका । सखि ! काञ्चनकमलवापिकातीरगते सहकारलतामण्डपे तिष्ठति ।

(ख) तिष्ठत्वेतत् । अन्यत् किमपि रहस्यं प्रक्ष्यामि । कस्मादेतदुपहतशोभं क-

---

नियोगमनुसृत्य प्रयुक्तं प्रकाशयति——आज्ञप्तास्म्यहं श्वश्रूपादैरिति रुक्मिण्या उक्तिः । श्वश्रूः भर्तुर्वासुदेवस्य माता । पादशब्दः पूज्यवाची । अद्याक्षमा मे पुत्री सुभद्रा तेषां भगवतां भिक्षां सम्पादयितुम् । तस्या भारं त्वमवलम्बस्व । भारं भिक्षासम्पादनादिकम् । इत्यात्मानं प्रति मातृनियोगमनूद्य तदनुवादशेषं सुभद्रां बोधयितुं चेटीप्रेषणमिति प्रेषणप्रकारमनुवदति—तत् त्वं गत्वा सुभद्रायै निवेदय।

---

१. 'आ सुभद्दा म' रा. ग. पाठः.

हिं विसण्णाहिं विअ दोहिंदोहिं महिळाहिं किं वि मन्तीअदि ।

**प्रथमा** — (क) सहि ! तुए वि सुदा भट्टिदारिआए अस्सत्थदा । कीस एदोणं विसादकारणं पुच्छसि ।

**द्वितीया** — (ख) सहि ! तुवं दाव उव्वेळस्स मअराअरस्स तरङ्गावळेवं हत्थेण णिवारेसि । तं भअवन्तं भट्टिदारिअं च उद्दिसिअ उट्ठिअं कोळीणं सव्वस्स णअरजणस्स मुहे सुणाहि ।

**प्रथमा** — (ग) णिम्मूळा हि पावआणं पळावा होन्ति ।

---

न्यापुर दृश्यते । केन वैकहस्तपर्यस्तकपोळमूलाभ्यामितस्ततो निषण्णाभ्यां विषण्णाभ्यामिव द्वाभ्याद्वाभ्या महिलाभ्या किमपि मन्त्र्यते ।

(क) सखि ! त्वयापि श्रुता भर्तृदारिकाया अस्वस्थता । कस्मादेतासां विषादकारण पृच्छसि ।

(ख) सखि ! त्व तावदुद्वेलस्य मकराकरस्य तरङ्गावलेप हस्तेन निवारयसि । त भगवन्त भर्तृदारिका चोद्दिश्योत्थित कौलीनं सर्वस्य नगरजनस्य मुखे शृणु ।

(ग) निर्मूला हि पापकानां प्रलापा भवन्ति ।

---

मात्मानमायासय क्लेशय । त्वया कर्तव्य तेषां भगवतामह करिष्यामि तान् प्रति त्वया कर्त्तव्यमित्यर्थः । एव सुभद्रा विज्ञापयेत्यहं देव्या रुक्मिण्या आज्ञप्तेति सम्बन्धः ॥

**दोहिंदोहिं** द्वाभ्यांद्वाभ्याम् ॥

**त्वयापि** श्रुता भर्तृदारिकाया अस्वस्थतेति काकुगर्भ वचनम् । तत् किं विषादकारणं पृच्छसि । एतदेव कारणमित्यन्यदाच्छाद्य कथनम् ॥

---

१ 'द वि' ग पाठ: २ 'व्वेण' ग पाठ

**द्वितीया** — (क) एदं वि अच्चाहिदं विअ मे पडिहादि, जं सव्वो एव्व जादवसमूहो मासमत्तणिव्वत्तणीअस्स छणस्स[1] किदे अन्तरदीवं गदो । इदाणिं इत्थिआमत्तसारं णअरं । एसो वि वेसन्तरप्पडिच्छण्णो देवउमारो महप्पहावो मक्खरी । ण आणामि किं होदित्ति ।

**प्रथमा** — (ख) उज्जुए ! का णाम इअं कहा देवपादभुअरक्खिअस्स णअरस्स । अलं एदिणा[2]। तुमं अत्तणो णिओअं अणुचिट्ठ । अहं पि भट्टिणीपादाणं सआसं गमिस्सं[3] ।

(निष्क्रान्ते)

प्रवेशकः ।

---

(क) एतदप्यत्याहितमिव मे प्रतिभाति, यत् सर्व एव यादवसमूहो मासमात्रनिर्वर्तनीयस्य क्षणस्य कृते अन्तरद्वीपं गतः । इदानीं स्त्रीमात्रसारं नगरम् । एषोऽपि वेषान्तरप्रतिच्छन्नो देवकुमारो महाप्रभावो मस्करी । न जानामि किं भवतीति ।

(ख) ऋजुके ! का नामेय कथा देवपादभुजरक्षितस्य नगरस्य । अलमेतेन । त्वमात्मनो नियोगमनुतिष्ठ । अहमपि भट्टिनीपादाना सकाश गमिष्यामि ।

---

छणस्स किदे क्षणस्य कृते । क्षण उत्सव , तन्निमित्तम् । अन्तरद्वीपम् । मस्करी परिव्राजक ॥

देवपादभुजरक्षितस्य नगरस्य श्रीमद्वासुदेवभुजवीर्यरक्षितस्येत्यर्थः । अत्र प्रवेशकेन अनुरागपारवश्येन सुभद्राया नायकपरिचरणासामर्थ्यं, तद्वियोगेन नायकस्य सन्तापातिशय , आभरणदानप्रसङ्गेन गात्रिकायाः पुनरपि विदूषकहस्तप्राप्त्युपाय', जनवादप्रसङ्गेनोभयोः परस्परानुरागस्य स्फुटीकरण, यादवजनस्य द्वीपान्तरगमनप्रस्तावेन नायकस्य सुभद्राहरणसौकर्यम् इत्यादि तृतीयाङ्क नायकयोरयोगविप्रलम्भवर्णनानुगुण्येन चेटीभ्यां सूचितम् ॥

---

१. 'उज्जगम' ग. पाठ. २. 'दिए' ख पाठ ३ 'णा। ध' ख पाठ.

(ततः प्रविशत्यारूढमदनावस्थो धनञ्जयः)

**धनञ्जयः**— (दीर्घं निःश्वस्य) अयि भोः कुसुमधन्वन् ! अपहृतहृदयलक्षे मयि मा नीनशः कुसुमशरान् । अविमृश्यकारिणश्च ते मुधाधनुर्धरम्मन्यस्य किञ्चिदुपदिशामि[1] । पश्य—

नेत्रे कर्णान्तयात्राव्यसनिनि कुटिले
कुन्तलीमञ्जरीणां
जाले मालेयपङ्कप्रणयिनि कुचयो-
र्मण्डले पाण्डुबिम्बे ।
फुल्लाम्भोजभ्रमाद्वा भ्रमदलिकुलयोः
पादयोरङ्गजन्म-
न्नङ्गे त्वं पक्ष्मलाक्ष्याः पुलकिनि मनसः
क्वापि मार्गस्व मार्गम् ॥ १ ॥

---

अथाङ्कादौ प्रथमं नायकस्यायोगविप्रलम्भवर्णनोपक्रम । अत आरूढमदनावस्थः प्रविशतीत्यनेनाभिलाषचिन्तास्मृतिगुणकथोन्मादाद्यवस्थापारवश्यं प्रकाशितम् । अत एव रणरणकेन निश्वासस्वेदरोमाञ्चाश्रुपाताद्यनुभावसवलनपूर्वकमुन्मादमवलम्ब्य मदनमभिमुखीकृत्योक्तिः—**अयि भो** इत्यादि । क्षेपार्थमयीति । अनुनयगर्भं भो इति सम्बोधनम् । कुसुमधन्वन्निति । पेलवानां कुसुमानां धनुष्ट्वेन परिग्रहाद् किल धानुष्कताभिमानोऽपि त्वया प्रकटीकृत, तस्य नायं युक्तो मार्ग इत्यर्थः । अपहृतहृदयलक्षे मम हृदयं लक्षीकृत्य ननु तव शरप्रयोग', तदपहृतम् । केनापहृतमिति तव सिद्धत्वान्न बोधयामि । तथापि लक्षसङ्ग्रहो धन्विनां शरसन्धानात् प्रागेव कर्तव्यः । तदभावाद् भवतोऽविमृश्यकारित्वं स्फुटम् । तेनैवाहमेव धनुर्धर इत्यात्मबहुमानश्च मुधैवेति भवल्लाघवमसहमानो लक्षसङ्ग्रहोपायं किञ्चिदुपदिशामि । तच्छृणु । कुसुमशरान् विषयप्रयोगयोग्यान् व्यर्थमेव मा नीनशः मा नाशय । **नेत्रे** इत्यादि । त्वं पक्ष्मलाक्ष्या अङ्गे क्वापि मे मनसो मार्गं

---

१ 'मि । ने' ग पाठः.

[1]ईरिसस्स महादाणस्स पत्तं होमि । अण्णं च सक्कुणोमि दाव ओट्ठपरिप्फन्दमत्तेण चेडीओ वञ्चेदुं । अणुदिणं ह्माणं करन्तो अवस्सं मरिस्सं । एदस्स किं करिस्सं । भोदु, दिट्ठं । पित्तरोआहिभूदो अहं त्ति सव्वजणसमक्खं उग्घोसइस्सं । जाव इमाए गत्तिआए सुभद्दाणुराअपरवसं वअस्सं समा[2]सासइस्सं । (परिक्रम्यावलोक्य) एसो वैअस्सो माहवीळदामण्डवे माहविं एव्व चिन्तअन्तो उक्किण्णा विअ पडिमा चिट्ठइ । जाव उवसप्पिस्सं णं । (उपसृत्य) जेदु भवं ।

**धनञ्जयः**–(दीर्घं निःश्वस्य) अहो दुस्सहो मे सन्तापः । किममुष्मात् प्रदेशात् प्रदेशान्तरं शीतलमाश्रयिष्ये[4] । (विचिन्त्य) अथवायमेव

---

एतस्य किं करिष्यामि । भवतु, दृष्टम् । पित्तरोगाभिभूतोऽहमिति सर्वजनसमक्षमुद्घोषयिष्यामि । यावदनया गात्रिकया सुभद्रानुरागपरवशं वयस्यं समाश्वासयिष्यामि । एप वयस्यो माधवीलतामण्डपे माधवीमेव चिन्तयन्नुत्कीर्णेव प्रतिमा तिष्ठति । यावदुपसर्पिष्याम्येनम् । जयतु भवान् ।

---

"कृतप्रभातकृत्याय ब्राह्मणाय विपश्चिते ।
दिनादौ विहितं दानं महादानं प्रचक्षते ॥"

इत्येवंरूपस्य । उत्कीर्णेव प्रतिमा तिष्ठतीत्यनेन स्तम्भरूपेण सात्त्विकानुभावेन चिन्तानुबन्धोऽनुमितः । अत एव माधवीमेव चिन्तयन्नित्युक्तम् ॥

अथ द्वयोरयोगविप्रलम्भस्य परिपोषे 'न विना विप्रलम्भेन सम्भोगः पुष्टिमश्नुते' इति संभोगारम्भसौभाग्याय प्रायशस्तृतीयाङ्कावसानं यावत् प्रतिपाद्यमाने नायकस्य भ्रमनिवृत्तावपि दर्शनविश्लेषेण नायिकायास्त्वेकस्यैव त्रिधा सङ्कल्पनेन सन्तापे उद्दीपनविभावैः स्तम्भरोमाञ्चस्वेदाश्रुप्रभृतिभिश्चानुभावैर्गुणवर्णनादिरूपैर्वागारम्भानुभावैरन्तरान्तरा गृहीतमुक्तैर्निर्वेदचिन्ताहर्षविषादादिभिश्च क्रमपरिपोषो यथा भवेत्, तथा प्रयोगोऽनुसर्तव्यः । अत एव विरहसन्तापमसहमानस्तमप्यपश्यन् स्ववैषम्यं प्रकाशयति—अहो इत्यादिना । दुस्सहः तूष्णीमासितुमप्य-

---

१. 'ए' ख. ग. पाठः. २. 'मस्सास' ग. पाठः. ३. 'असमर्थ मा' ग. पाठः.
४. 'ष्ये । अ' क. ख. पाठः.

श्रेयान्। अत्र हि—

मन्दप्रेङ्खितपल्लवाः स्मरसखैर्मन्दागमैर्मारुतै-
र्बिभ्राणा मधुवाहिनीर्मधुकरीझङ्कारिणीर्मञ्जरीः।
प्रच्छायप्रतिबद्धशैत्यविभवाः पीडां दधत्योऽपि मे
मन्ये किञ्चिदिमा भवन्ति धृतये तन्नामधन्या लताः॥ २॥

सामर्थ्यमापादयन् प्रियतमावलोकनोत्सवविश्लेषजनितः सोढुमशक्यो भवति। अतस्तच्छमनाय शीतल प्रदेशान्तरमाश्रयिष्ये। शैत्यस्य सन्तापप्रतियोगित्वाच्छीतलमित्युक्तम्। अत्रापि शीतलत्वं सिद्धम्। तत् सन्तापकरमेव। अन्यत्रान्यथा भवेद्वेति भ्रमः। अथवेति प्रदेशान्तरादस्य सन्तापहरत्वं निरूप्य विकल्पः। तत् प्रतिपादयति—मन्देत्यादिना। इमा लता मे किञ्चिद् धृतये भवन्ति। इमा एतन्मण्डपसम्पादनसाधनभूताः। मे अनन्याश्रयस्य। किञ्चिद् धृतये सन्तापमध्येऽपि स्वल्पसुखाय भवन्ति निस्सुखस्य किञ्चिल्लाभोऽपि श्रेयानिति भावः। तर्हि सुखावहत्वमासां सर्वथा सिद्धमिति चेत् तन्नेत्याह—पीडां दधत्योऽपि इन्द्रियाणामन्तःकरणस्य च वैषम्यं विदधत्योऽपीत्युपसर्गार्थो धातुर्लीन एव। ददत्योऽपीति वा पाठः। पीडाहेतुत्वं विशेषणद्वारा समर्थयति—मारुतैर्मन्दप्रेङ्खितपल्लवाः। मारुतैः विच्छिद्यविच्छिद्य सर्वदिक्षु बहुप्रकारं वलमानैः। अतो बहुवचनम्। मन्दप्रेङ्खितपल्लवाः अल्पाल्पं विचलितनिचितपल्लवाः। अत्र मन्दचलनेनैव मन्दागमत्वे सिद्धे मन्दागमैरित्युक्त्या स्मरसखत्वेन स्मरतल्पनकर्णालङ्करणादिसाधनानां पल्लवानां त्रुटनादिना म्लानिर्मा भूदिति मन्दमन्दमागत्य शोभार्थमीषच्चलयाद्भिरिवेति व्यज्यते। अत्र स्मरोद्दीपकानां मारुतानां संश्लेषेण चलितानां पल्लवानां मदनानलज्वालायमानत्वान्नयनपीडावहत्वमासाम्। पुनर्मञ्जरीर्बिभ्राणाः (मञ्जरीः) परिपूर्णविकासानि कुसुमानि। मधुवाहिनीः मधुप्रवाहधारिणीः। अत एव मधुकरीझङ्कारिणीः मधुरसपानतुन्दिलमधुकरीनिरन्तरगीतसौभाग्यसुभगसंस्थानाः। अतः श्रोत्रघ्राणयोरपि पीडावहाः। प्रच्छायेन बहुलया पल्लवकुसुमदलादिनिचितया छायया असूर्यम्पश्यान्तरत्वेन प्रतिबद्धशैत्यविभवाः, अथवान्यतो गमनान्निरुद्धशैत्यसम्पदः। अतोऽसह्यस्पर्शत्वम्। अत इन्द्रियाणां तत्प्रेरकस्य मनसश्च पीडा दधत्योऽपि। अत्रोद्दीपनवर्णनचातुर्येण (इ? सात्त्व)त्या वृत्त्या बन्धपारुष्यं निह्नुतम्। एवं पीडाकरत्वेन कथं विरुद्धं धृतिकरत्वमित्यत्र प्रबलं हेतुमाह—तन्नामधन्या इति। प्रियतमानामैवासामपि नाम माधवीति। नामविशेषः प्रकरणात् सिद्धः। माधवीनाम्ना कथन आसामतीव हृद्यत्वम्। अत एतत्सन्निधिवासस्य धृतिकरत्वम्।

मार्गस्व। त्वं तत्पुरस्सरतया सर्वत्र सहकार्येपि प्रमादेनाजानन्नेवापाटवप्रकाशकं सुधाशरव्ययं कुर्वन्, अत एवोपदेश्यः। पक्ष्मलाक्ष्या इति सर्वाङ्गसौन्दर्योपलक्षणेन मनःप्रवृत्तेरौचित्यं प्रकाशितम्। तव सिद्धत्वादेव माधव्या इत्यादिविशेषो न कथ्यते। अत एवापहरणेऽपि तयेत्यादि न कथितम्। तेन सिद्धे वस्तुन्यविमर्शो महान् प्रमाद इति ध्वनितम्। अङ्गे इति मनसश्चलत्वेन बहुविषयधावनेऽपीदानीं तदङ्ग एव विश्रान्तिरिति मार्गणसौकर्यं प्रकाशितम्। तत्रापि वेधसो वनितासृष्टिसीमायमानेऽवयवानां सौन्दर्यसौकुमार्यकान्तिलावण्यादितत्तद्गुणगणपरिपूर्णतया अहमहमिकया चित्ताकर्षणचातुर्येण चित्तस्यौत्सुक्येन चास्मिन्नवयव इति वक्तुं न शक्यम्। अतः क्वापीत्युक्तम्। अङ्गजन्मन्! अङ्गे इत्यनेन स्वजन्मभूमौ मार्गोपरिज्ञानमतीवानुचितमिति स्फुरति। क्वापीत्युक्ते विषयविशेषाबोधेन मार्गणस्य तव परिश्रमो मा भूत्। मनःस्थितिविषयं विशेषतो बोधयामि। नेत्रे कर्णान्तयात्राव्यसनिनि कर्णान्तयात्रायां निर्बन्धवति। व्यसनं निर्बन्धः। एतद् गुणान्तरोपलक्षणम्। नयनगुणानां सामग्र्येणास्य गुणलम्पटत्वेन च प्रथमं तत्रान्विष्यताम्। अत्रैकवचनं न विवक्षितम्। अथवा चित्तापहरणे नयनस्य करणत्वं, तत्रापि त्रिभागस्य। प्राथमिक एतदवलोकने प्रस्थानदशायां भावसर्वस्वप्रकाशकस्य त्रिभागमात्रस्य चित्ताकर्षणसाधनत्वं दृष्टम्। अतः प्रथमं तत्रान्वेषणं युक्तमित्येकत्वमपि घटताम्। लोके रत्नादीनामपहरणे करस्य करणत्वात् तत्र सन्निधिः प्रथमं शङ्क्यते। एवमिहापीति प्रथमं नेत्र इत्युक्तम्। कुन्तलीमञ्जरीणां परिस्फुटावयवविकस्वरतया नीलोत्पलादिमञ्जरीतुल्यानां कुन्तलीनां जाले अलकानां समूहे। कुटिल इति स्निग्धतादिगुणान्तरोपलक्षणम्। सर्वत्र विशेषणैस्तत्तद्गुणगरिम्णा निःचप्रसरौचित्यं प्रकाश्यते। वाशब्दः सर्वशेषः। कुचयोर्मण्डल इति। क्रमेणाङ्गोपाङ्गप्रत्यङ्गतद्गुणगणपरिगणनं न शक्यम्। आदिमध्यान्तपरिग्रहे आन्तरालिकानि स्थानानि मनःसंस्थितियोग्यानि त्वया निरूप्यन्तामिति भावः। मालेयपङ्कमणयिनि चन्दनरसपरिचयभासुरे। अत्रालङ्कारत्वेन शिशिरोपचारसाधनतया च चन्दनपङ्कसम्बन्धो घटते। अत्र पङ्कशब्देन कुचयोः पङ्कजसाम्यं स्फुरति। पाण्डुबिम्बे पाण्डुस्वरूपे। पाण्डुत्वं विरहावस्थाकृतम्। पादयोर्वा अर्थात् कोमलारुणविकस्वराङ्गुलिदलयोः पदतलयोर्ग्रहणम्। अत एव फुल्लाम्भोजभ्रमाद् भ्रमदलिकुलयोरित्युक्तम्। एवमापादचूडमन्वेषणे कुत्राप्यस्य मार्गः सिध्यति, कियद्वा प्रत्येकं

(विचिन्त्य) कष्टं बत प्रेयसीरूपामृतपानविच्छेदविपुलीकृतमहिम्नो वासरस्यास्य यापनेसाधनं तत्पयोधरभारपीडनसुभगा गात्रिका, सखा च मे कौण्डिन्य इति द्वयमपि दुर्लभदर्शनमभूत्।

(ततः प्रविशति गात्रिकाहस्तः प्रहृष्टो विदूषकः)

**विदूषकः**—(सविस्मयम्) (क) भो दुवारवदीदो अपरा ण का वि णअरी बह्मणदुब्भिक्खत्ति तक्केमि, जहिं अहं णाम

(क) भोः द्वारवत्या अपरा न कापि नगरी ब्राह्मणदुर्भिक्षेति तर्कयामि, यस्यामहं नामेदृशस्य महादानस्य पात्रं भवामि। अन्यच्च शक्नोमि तावदोष्ठपरि-[1]स्पन्दमात्रेण चेटीर्वञ्चयितुम्। अनुदिनं स्नानं कुर्वन्नवश्यं मरिष्यामि।

कथ्यतामिति भावः। पुलकिनि तस्या अस्मदनुसन्धानधुरन्धरत्वेन तत्रतत्र पुलकस्वेदपाण्डुतादिकमप्युन्नेतुं शक्यम्। अतः परस्परानुरागस्फुरणे तव घटयितुमेव प्रयासो युक्त इति व्यज्यते॥ १॥ एवमुन्मादेन मदनं प्रति व्यवहरन् प्रवृद्धसन्तापः स्ववैषम्यं निरूपयति—कष्टं बतेत्यादिना। कष्टं कृच्छ्रम्। आपतितमिति शेषः। तेन खेदे बतशब्दः। तदेव स्फुटयति—प्रेयसीरूपामृतपानस्य शुश्रूषणानुबन्धेन तदातदा नवत्वेन सिद्धस्य प्रेयसीरूपामृतपानसौहित्यस्य विच्छेदेन हेतुवशात् सम्पादितेन विपुलीकृतमहिम्नः, स्वतः सिद्धस्य महिम्नो दैर्घ्यस्य विपुलीकरणं विधिकर्तृकमेव। अथवा विच्छेदस्य कर्तृत्वम्। तादृशस्य वासरस्येष्टालाभेऽपि कालातिवाहनोपायतया द्वयं सङ्गृहीतम्। तत्पयोधरभारपीडनेन क्षणसुलभमहिम्नोः पयोधरयोः परिमितेन स्वावकाशेन यत् पीडनं, तेन सुभगा अस्मद्विनोदनानुकूला गात्रिका, सखा नर्मालापादिना कालयापनदक्ष इति द्वयमपीदानीं दुर्लभदर्शनमभूदित्येतदतिकृच्छ्रमित्यर्थः॥

अथ सखा च मे कौण्डिन्य इति सूचितस्य नर्मसचिवस्य प्रवेशः। **ब्राह्मणदुर्भिक्षा** ब्राह्मणानां दुर्भिक्षमल्पत्वं यस्यामिति व्यधिकरणबहुव्रीहिः। महादाणस्स

[1] 'ना' ग. पाठः.

विदूषकः—(क) अहो ण किञ्चि एदेण सुदं । एव्वं दाव भणिस्सं । भो वअस्स ! मारसरेहि तुज्झ कण्णपुडाइ परिपूरिदाइत्ति तक्केमि, जेण वहिरो संवुत्तो ।

धनञ्जयः—(विलोक्य) अये वयस्यः कौण्डिन्यः । सखे ! किमर्थं विलम्बितोऽसि ।

विदूपकः—(गात्रिकां दर्शयित्वा) (ख) एदं मे विलम्बणकारणं ।

धनञ्जयः—(सानन्दम्) सखे ! कुत इयं समासादिता ।

विदूपकः—(ग) तुमं अन्तरेण मणुस्सा मं पि वह्मणोत्ति पडिवज्जन्ति, जेण अज्ज प्पभादे एव्व तत्तहोदीए सुहद्दाए वअणेण एक्को वुड्ढकञ्चुईओ मह पादप्पक्खाळणं कादूण पडिगेह्ण एदं हारं त्ति मं ळम्भिअ गओ । अहं पुण एदस्स अन्धदाविळासो एस भूसणविवज्जासोत्ति चिन्तिअ, होदु, एदाए वअस्सं विणोदइस्सं त्ति घेत्तूण आअदो ।

---

(क) अहो न किञ्चिदेतेन श्रुतम् । एव तावद्भणिष्यामि । भो वयस्य ! मारशरैस्तव कर्णपुटे परिपूरिते इति तर्कयामि, येन बधिरः संवृत्तः ।

(ख) एतन्मे विलम्बनकारणम् ।

(ग) त्वामन्तरेण मनुष्या मामपि ब्राह्मण इति प्रतिपद्यन्ते, येनाद्य प्रभात एव तत्रभवत्याः सुभद्राया वचनेनैको वृद्धकाञ्चुकीयो मम पादप्रक्षालनं कृत्वा प्रतिगृहाणेत हारमिति मां लम्भयित्वा गतः । अहं पुनरेतस्यान्धताविलास एष भूषणविपर्यास इति चिन्तयित्वा, भवतु, एतया वयस्यं विनोदयिष्यामीति गृहीत्वागतः ।

**धनञ्जयः** —(सहर्षम्) सखे ! महत् खलु मित्रकृत्यमनुष्ठितम्।

(आदाय हृदये निक्षिपन् सरोमाञ्चम्)

अधुना हृदयममुष्याः
स्पर्शामृतवारिपूरसंसिक्तम्।
मनसिजहुतवहदग्धं
पुनरिव पश्य प्ररूढं मे ॥ ३ ॥

**विदूषकः** —(सविषादम्) (क) भो वअस्स ! को णु खु इमाए दु-
क्खत्थाए परिणामो ।

**धनञ्जयः** —सखे! नाहमपि जाने[2] । पश्य —

भवति नियतिपाशो नेत्रयोः षट्पदाली
निशिनिशि निशिताग्राः सूचयश्चन्द्रपादाः ।
विषहुतवहपातं मालयो मातरिश्वा
मम वपुषि विधत्ते वेत्ति शेषं मनोभूः ॥ ४ ॥

(क) भो वयस्य ! को नु खल्वस्या दुरवस्थायाः परिणामः ।

अधुनेत्यादि । अत्र दग्धस्यापि प्ररोहोपपत्तये स्पर्शस्यामृतवारिपूरत्वमारोपितम् । पश्येति । स्तम्भस्वेदरोमाञ्चाद्यनुभावस्य दर्शनकर्मत्वम् ॥ ३ ॥

अस्या दुरवस्थायाः कः परिणामः । एवं क्रममूर्छनं वा विधिवशादवस्थान्तरसङ्क्रमणं वा दुरवस्था त्याज्यैवेत्यभिप्रायः ॥

नाहमपि जाने इति । अहमपि अनुभवन्नपि दुरवस्थापरिणामं न जाने ममाप्यत्र न पाण्डित्यम् । सखे ! इति मच्चित्तवैषम्यमनुसृत्य त्वं कथयसि । तद् विमृश । वर्तमाना दुर्दशा त्वां बोधयामि । भवतीत्यादि । षट्पदाली बहलपुष्पपरिमलानुसारेण मधुरसोत्सुका मालाकारेण तत्र तत्र सञ्चरन्ती भ्रमरमाला नयनयोर्नियतिपाशो भवति । यथा नियतिपाशावलोकनेऽसह्यता भवति, तथा नयनयोरेतदालोकने पीडा भवतीति नियतिपाशत्वारोपः । नयनयोर्नियतिपाश इत्यनेन

१ 'य —सखे' ग पाठ. २ 'ने । भ' क ख पाठ ३ 'वपुषि मम वि' ग पाठ

**विदूषकः—(क) भो! चिट्ठदु दाव अणङ्गो। जो तदा पढमदंसणे पइट्ठमाणाए तत्तहोदीएँ सुहद्दाए तइ णिक्खित्तो, सो च्चिअ अवङ्गप्पआवई ताए तुमं घटइस्सिदित्ति तक्केमि।**

(क) भोः! तिष्ठतु तावदनङ्गः। यस्तदा प्रथमदर्शने प्रतिष्ठमानया तत्रभवत्या सुभद्रया त्वयि निक्षिप्तः, स एवापाङ्गप्रजापतिस्तया त्वां घटयिष्यतीति तर्कयामि।

---

तदवलोकन एव दर्शनशक्तिः क्षीयत इति प्रकाशितम्। निशिनिशि निशिताग्रा इति, न तु पूर्वसिद्धं नैशित्यमेव, रात्रौरात्रौ विशेषेणोत्तेजिताः सूचय एव। सूचिघाते यथा पीडा भवति, तथा चन्द्रपादस्पर्शने। अथवा नेत्रयोरित्यत्राप्यनुपज्यते। दिवानिशमेकरूप एव नयनोपघातः। तर्हि नयने सम्मील्य कचिदवस्थातुं शक्यमित्यत्राह—विषहुतवहपातं मालयो मातरिश्वा, सर्वेषां ह्योऽपि भागयदोषेण मम वपुषि विषाग्निं पातयति। विषाग्नित्वकथनेनादृश्यत्वेऽपि सर्वत्र व्यापित्वेनासह्यतातिशयः प्रकाश्यते। पातमिति। तदातदा वीजने सर्वाङ्गीणं विषाग्निमुद्वमति। उपलक्षणत्वेनैतदुक्तम्। सर्वेऽपि रम्या इन्द्रियार्था ममासह्या एव। इयन्मात्रमेवाहं जानामि शेषं मनोभूर्वेत्ति सुखोदर्कं दुःखोदर्कं वेति। अस्माभिः सर्वथा तत्कैङ्कर्यमवलम्ब्यते॥ ४॥

एवं नायकस्य वैक्लव्यं ज्ञात्वाश्वासनोपायमाह—चिट्ठदु इत्यादि। अनङ्गस्तिष्ठतु। वेत्ति शेषं मनोभूरिति किमुच्यते। असावेवास्मत्साध्यं निर्वोढुं समर्थ इति भवतः प्रतीतिः। छायापुरुषशिरसि भारसमारोप एव भवता क्रियते। परस्परानुरागे निश्चिते तया भवतः सङ्घटने निपुणः कोऽपि मया निरूपितः। तया प्रथमदर्शने प्रतिष्ठमानया भवद्वन्दनपादप्रक्षालनादिकं कृत्वा सखीभ्यां सह परिचरणशेषसम्पादनार्थं गन्तुमुद्यतया यस्त्वयि निक्षिप्तो न्यस्तः[1]। प्रथमदर्शन इत्यनेन 'युवनयो हि संसृष्टमभीक्ष्णदर्शनं च पुरुषं कामयन्ते' इति कामसूत्रानादरेण झटिति भावसमावेशेन दैवानुकूल्यमत्र प्रकाश्यते। प्रतिष्ठमानया कतिचित् पदानि विन्यस्य वलितग्रीवं निरीक्षमाणयेत्यनेन निजानुरागप्रकाशनेऽध्यवसायः सूचितः। अत एव निक्षिप्त इत्युक्तम्। निक्षेपवदिदं मनस्त्वयि निक्षिप्तं रक्षेति प्रार्थयन्त्येव। स एवापाङ्गप्रजापतिस्तया त्वां घटयिष्यतीति तर्कयामि।

---

१ 'एष' ग पाठः.

**धनञ्जयः**——सत्यमाह भवान् । ममाप्येष एव तर्कः । तथाहि-

याच्ञा प्रेम्णा प्रतीच्छ प्रणयमिति मम त्वं प्रियोऽसीति रागः
सङ्केतस्त्वां प्रपत्स्ये पुनरिति पुरतस्ते स्थितास्मीति लज्जा ।
किं भूयोऽपि प्रलापैर्धृतिमुषि ललितभ्रूलतालास्यधन्ये
मन्ये नासीन्न किञ्चिद् विजितकुवलये तत्र नेत्रत्रिभागे ॥५॥

---

स एव, नान्यं सहायमपेक्षते । कटाक्षपातेऽनुरागसर्वस्वप्रकाशनेन घटनसामर्थ्यं निरूप्य अत्रायमेव प्रजापतिरिति मयोक्तम् । यूनोः समागमे परस्परानुराग एव निर्वाहकः । तस्मिन्ननुकूले सति किमन्यदपेक्ष्यत इति भावः । तया त्वामित्यनेन सङ्घटनस्य योग्यतातिशयः प्रकाश्यते । अत आन्तरालिकं दुरवस्थानुभवं परित्यज्य स्वैरमास्स्वेत्यभिप्रायः ॥

इति स्वहृदयसंवादि तद्वचनमाकर्ण्य स्मरणपूर्वं श्लाघते——**सत्यमाह भवान्** । नात्र किञ्चित् चाटुभाषणेनारोपितम् । वस्तुवृत्तमेव भवानाह । **ममाप्येष एव तर्कः** । अपाङ्गप्रजापतिस्तया त्वां घटयिष्यतीति तर्कयामीति त्वयोक्तम् । एष एव ममापि तर्कः । मन्मनोवृत्तिमनुसरति तव बुद्धिः । तथाहीति मम तर्कबीजं त्वां बोधयामि । तत्र **नेत्रत्रिभागे** किञ्चिन्नासीन्न । तस्या इत्यर्थसिद्धत्वान्नोक्तम् । तत्र त्वया प्रस्तुते सावधानमनुभूतचातुर्ये च नेत्रत्रिभागे वलितावलोकनप्रवर्तिते तृतीये भागे, अपाङ्ग इत्यर्थः । त्रिभागस्यैव सर्वभावाविष्करणपाण्डित्यं, किं पुनः सकलस्येति प्रकाश्यते । किञ्चिद् आत्मानुरागपरिपोषे कामुकं प्रति प्रकाशनीये *रतिपरिपोषानुगुणं निजावस्थानिवेदनरूपं वस्त्वपाङ्गमात्रेण* प्रकाशयितुं न सम्भावनीयमिति न, सर्वमेवासीदित्यर्थः । सम्भाव्यनिषेधनिवर्तने हि द्वौ प्रतिषेधौ । तत्र साकल्येन विशेषकथनापाटवेऽपि बहुप्रकारमनुभूतेषु द्वित्रान् भावांस्त्वां बोधयामि । प्रथमं याच्ञा आसीत् स्वावस्थानिवेदनपूर्वं प्रार्थनासीत् । तत्र याच्ञामात्रमेवोन्नेतु शक्यम् । विशेषो नावधारणीय इति चेत्, तन्न, विशेषरूपेण प्रकटा प्रणय प्रतीच्छेति, त्वद्विषयं मम परित्यक्तविषयान्तरमतिवैवश्यजनकं प्रेमपरकाष्ठारूपं प्रणय प्रतीच्छ परिगृहाण । तत्र गुरुदेवतादिषु सेवकानां भक्तिर्यथा तटस्थवृत्त्या परिगृह्यते असौ मयि भक्त इति, तथा ग्रहणे मम नाभि-

प्रायसिद्धिः, अपितु प्रेम्णा स्नेहेन, इयं बाला मयि निर्व्याजं प्रणयमनुसरति, तदिमां स्निह्यामीति कारुण्यापरपर्यायया मनोवृत्त्या गृह्यतामित्यर्थः। प्रेमानुवर्तनमेवास्य परिग्रह इति भावः। अत्र वचनेन प्रार्थनाप्रकाशने यथा स्फुटता, तथैवापाङ्गे(न)इति प्रकाशयितु वचनप्रकाररूपेण याच्ञाप्रकाशनम्। एवम् उपर्यपि तत्तद्विशेषस्फुटीकरणम्। पुना राग आसीत् स्वानुरागप्रकाशनमात्रं, पूर्वत्रातिप्रवृत्तिशङ्कया स्वावस्थानिवेदनमेव युक्तम्। कथं भवन्मनोवृत्तिं जानामि। मम त्वं प्रियोऽसि अन्यानिरोध्यस्य चित्तलयकारिणः पक्षपातस्य त्वमेव पात्रभूतः। इयन्मात्रं बोधयामीति रागः। विषयेष्वबाध्यस्नेहो हि रागः। पुनः सङ्केतः समय आसीत्। त्वां प्रपत्स्ये पुनः दैवादागतस्य साम्मुख्यस्यानुसरणमेव युक्तं, तथापि शुश्रूषाशेषतया प्रवृत्त्यन्तरमनुसृत्यानिच्छयापि सन्निधिं मुञ्चामि। पुनरविलम्बित त्वां प्रपत्स्य इति सङ्केतः। त्वामिति सिद्धेऽपि तदातदा भावप्रकाशने साम्मुख्य स्फुटीक्रियत इति प्रकाश्यते। लज्जा कुलपालिकाया मुग्धकन्याया निरन्तरानुबद्धापि लज्जा विशेषेण तदानीं नयनोपान्तेन प्रकाश्यते। पुरतस्ते शङ्कनीयस्य महापुरुषस्याग्रतः स्थितास्मि अपसरणतिरोधानादिकं विना स्थितेत्यनौचित्यप्रकाशिनी लज्जा। उक्तानामनुक्तानां वा भावरसायनानां प्रकाशनं क्रमेण वा, सम्भूय वेति ज्ञातुं न शक्यम्। सकलमनुभवगोचरं गतमित्येव वक्तव्यम्। अतो भूयः पुनःपुनर्भावप्रकाशनपरैर्विविधैः प्रलापैः किं फलितम्। अशक्यत्वादनुपयोगाच्चेदमेवालमिति भावः। अत एव समष्टा भावसर्वस्वमासीदित्युक्तम्। त्वमेव महापुरुष इति बहुमानः, मद्धृदयमकपटं त्वां बोधयामीति विश्वासापरपर्यायो विस्रम्भः, मदीयं वैवश्यमेवम्भूतमिति स्वावस्थाप्रकाशन, त्वमेव मे जीवितालम्बनमित्यात्मार्पणम् इत्यादिका भावाः सङ्ख्यातु न शक्यन्ते। धृतिमुषि धैर्यापहरणदक्षे। तदाप्रभृति धैर्यविश्लेषेण मयैतन्निश्चीयते। ललितभ्रूलतालास्यधन्ये ललितयोर्भ्रूलतयोः लास्येन निजमहोत्सवानुगुणेन विलसितेन धन्ये आदरणीये। मन्ये इति न खलु तटस्थवृत्त्या कल्पनम्। तदानीमनन्यपरतयानुभूतस्यापाङ्गविलसितस्य विजातीयप्रत्ययातिरस्कारेण सततमप्रमोषमुन्मेष एव भवति। अत इदमेव माध्यमिन्द्रं स्वर्गसंवादसुन्दर विभ्रमैर्मीत्यभिप्रायः। विजितकुवलय इति त्रिभागस्यैव कान्तिसम्पदा कुवलयविजयसामर्थ्यं नयनयोर्निरुपमानत्वं किं कथ्यताम्॥ ९॥

विदूषकः — (क) जइ एरिसो से अणुराओ, कीस अदिमत्तं अत्ताणं आआसेसि। ता उभयाणुराअसुहअं सङ्गमकाळं पडिक्खन्तो सेरं चिट्ठ ।

धनञ्जयः — सखे ! नाहं न प्रतीक्षिष्ये कालम्। मां पुनरयं बलवदुपरुन्धानो न प्रतीक्षते कामः ।

विदूषकः — (ख) भो वअस्स ! का णाम इअं अहीरदा । जस्स दे जण्णसेणीसअंवरसमअसंखोभिदाणं खत्तिआणं ण एक्को वि अपरम्मुहो आसी, तस्स किळ दे एदेहि अदिसुउमारेहि [1]मणसिअपरक्कमेहि विहुरं होइ हिअअं ।

---

(क) यदीदृशोऽस्या अनुरागः, कस्मादतिमात्रमात्मानमायासयसि । तदुभयानुरागसुभग सङ्गमकाले प्रतीक्षमाणः स्वैरं तिष्ठ ।

(ख) भो वयस्य ! का नामेयमधीरता । यस्य ते याज्ञसेनीस्वयंवरसमयसंक्षोभितानां क्षत्रियाणां नैकोऽप्यपराङ्मुख आसीत् , तस्य किल ते एतैरतिसुकुमारैर्मनसिजपराक्रमैर्विधुरं भवति हृदयम् ।

---

**यदीदृश** इत्यादिनाश्वासनोपक्रमः । ईदृशः कटाक्षे सर्वभावप्रकाशनेन निश्चितः । तत् परस्परानुरागे सिद्धे सङ्गमस्य काल एव प्रतिपालनीयः । तादृशस्य कालप्रतीक्षणमपि हृद्यमेव । अतः स्वैरं तिष्ठ । किमेवं वैक्लव्यमवलम्ब्यत इति ॥

अस्योत्तरमाह — **नाहं न प्रतीक्षिष्ये** । अहमनन्यशरणोऽनन्यापेक्षश्च यावत्फलोदयं प्रतीक्षिष्य एव । अयं पुनर्मत्प्रेरकः कामस्त्वरते । अत एव मां बलवदुपरुन्धानोऽतीव पीडयन् क्षणमपि स्वैरमासितुमसमर्थं करोति ॥

**का नामे**त्यादि । अधीरतैवात्र वैषम्यहेतुः, नासामर्थ्यम् । याज्ञसेनीस्व-

---

१. 'इ एव्वं ए' इति मूलकोशपाठः.

धनञ्जयः— (विचिन्त्य) सखे ! सत्यमश्रद्धेयमेवैतत् । कुतः—

भवति धनुरमूर्तेर्यस्य सङ्कल्पयोने-
मधुकरमयमौर्व्यः पेलवाः पुष्पमालाः ।
परभृतपरिवारौ यस्य मासावमात्यौ
स किल मयि विधत्ते साहसानीदृशानि ॥ ६ ॥

विदूषकः—(क) जइ एव्वं, एस पिण्डिअत्थो – पञ्चसरो कुसुमआवो मअरकेदुत्ति एदेहि अदिसुउमारेहि णिरत्थएहि अ-

---

(क) यद्येवम्, एष पिण्डितार्थः—पञ्चशरः कुसुमचापो मकरकेतुरित्येतैरतिसुकु-

---

यंवरसमये संक्षोभितानां भवत्पराक्रमेण सङ्क्षोभं नीतानां क्षत्रियाणां, न केवलं तत्परिजनानाम् । एकोऽपि, बहवस्तिष्ठन्तु । अपराङ्मुखः युद्धाय सम्मुखीनः, दूरे पराक्रमः । सर्वे विमुखाः पलायिताः । एतस्य तादृशप्रतापस्य । अतिसुकुमारैः पुष्पपल्लवादिसम्पादितैः । मनसिजस्य स्वयं निस्सारस्य निरूपणे निष्प्रयोजनैः (पराक्रमैः) हृदयं विधुरं भवति । अधैर्यमेवात्र निमित्तम् ॥

अश्रद्धेयम् अविश्वसनीयतया विद्यमानमित्यर्थः । भवतीत्यादि । स्वयममूर्तेर्धनुर्भवति मूर्तं विद्यते । किं तत्, पेलवाः पुष्पमालाः, अतिमृदवः, तत्रापि पुष्पमालाः तत्तत्कालानुगुण्येन भिन्नप्रकाराः । मधुकरमयमौर्व्यः मधुकररूप(ज्या) इत्यर्थः । पुष्पमालाविशेषणत्वमतीव दुर्घटम् । मासावमात्यौ मधुमाधवौ, न नित्यप्रवृत्तौ । परभृतपरिवारौ परिवारोऽपि तत्सम्बद्ध एव । य एवं सङ्कल्पमात्रसारोऽघटमानसमस्तपरिकरः, स मयीदृशानि साहसानि देशकालानपेक्षया स्फुरणानन्तरकृतानीन्द्रियमोहनादीनि बलात्कारादाचरति । किलेति परबुद्ध्यनुसारेणाश्रद्धेयताप्रकाशनम् । मम तु श्रद्धेयमेवास्य कर्मेति भावः । अन्यथा मदनातुरस्य तत्त्वनिरूपणं न घटते ॥ ६ ॥

यद्येवमिति अस्यावस्तुत्वे भवत अनिच्छयाप्येकदेशानुवादः । अतस्त्वादृशां कामुकानामुद्दीपनमेवास्य सत्तानिमित्तम् । उद्दीपनप्रकारः पञ्चशर इत्यादि ।

क्खरेहिं केवळं तुह्मारिसा कामुआ उग्घोसन्ति । परमत्थदो उण सुण्णपय्याओ कामसद्दो त्ति ।

**धनञ्जयः**— सखे! नासौ परिहासावसरः, यदियन्तं कालमालम्बनमतिविधुरस्यास्य हृदयस्य, यत् प्रतिदिनं सा दृश्यत इति, तदपि विधिरपहृत्य सङ्क्रमयति स्म मदाराधनाधिकारं तत्रभवत्यां वैदर्भ्याम् । तद्दर्शनदुर्ललितं गलितबन्धनमधुना पततीव मे हृदयम् ।

**विदूषकः**— (क) भो! कीस विसीदसि । एदेसु सुरभिसमअविअसिदेसु पादवेसु दिट्ठिं विणोदेहि ।

---

मारैर्निरर्थकैरक्षरैः केवल त्वादृशाः कामुका उद्घोषन्ति । परमार्थतः पुनः शून्यपर्यायः कामशब्द इति ।

(क) भो ! कस्माद् विषीदसि । एतेषु सुरभिसमयविकसितेषु पादपेषु दृष्टिं विनोदय ।

---

शरचापध्वजादिप्रकाशनेन वीरत्वसमर्थनम् । वस्तुत कामशब्दः शून्यपर्यायः शशविषाणादितुल्यः ॥

**नासावित्यादि** । परिहासः नर्मालाप, तस्य नायमवसरः । यदियन्तं कालमित्यादि । वाक्यार्थपरामर्शी यच्छब्दः । अधुना पततीव मे हृदयं यत् तत् परिहासस्य नायं काल इति संबन्ध । तस्य निमित्त प्रकाशयति — इयन्त कालमित्यादिना । अतिविधुरस्य सङ्गमाभावेनातिपीडितस्य । इयन्तं कालं प्रतिदिनं सा दृश्यत इति यदालम्बनं नयनोत्सवलाभाद्, विधिस्तदप्यपहृत्य दृग्मात्रं सुखमस्य मा भूदित्यसूययाक्षिप्य मदाराधनकृत्य वैदर्भ्यां सङ्क्रमयति स्म । अत उपरि दर्शनोपायमपि निरुद्धवान् । तर्हि यावद्दर्शनं धैर्यमवलम्ब्यतामिति चेद्, हृदयं न मद्विधेयं, यतः तद्दर्शनदुर्ललितं दुर्लभेऽपि तद्दर्शने प्रतीक्षणासमर्थं दुर्वृत्तम् । गलितधैर्यबन्धन मातृनिरीक्षणोत्सुकबालवत् संभ्रमद् अधुना पततीव अवसीदतीव । तत् कथमिदानीं परिहासः क्रियते अतिमात्रमायासयसि ॥

अहमात्मविनोदनोपायं कथयामि । एतेषु निरन्तरं दृश्यमानेषु सुरभिसमय-

धनञ्जयः — सखे ! ‡अतिदुष्करमुपन्यस्तम् । कुतः —

चकितचकितं चन्द्रालोकाद् भयादपवर्तिते
विकचकमलात् प्रत्यानीते हतात् कमलाकरात् ।
मधुकरविपक्षोभक्लिष्टे वसन्तमहीरुहां
कथमिव सखे! कुर्वीयाता दृशौ कुसुमे पदम् ॥ ७ ॥

तदलमतिदुस्सहदर्शनैः पदार्थैः । प्रियतमानिरीक्षणोपाय एव तावच्चिन्त्यताम् ।

---

विकसितेषु सर्वतो विकसितेषु पादपेषु दृष्टिं विनोदय नियोजय । सन्तापं मा कृथाः ॥

अशक्यारम्भ इत्यादि । निरीक्षितुमुद्यमोऽपि न शक्यः । यतः **चन्द्रालोकात्** चकितचकितमपवर्तिते भीतभीतं निवर्तिते । भयात् क्षोपभयाद्, भयनिमित्तादित्यालोकविशेषण वा । कमलाकराद् हतात् पीडाकरत्वेन वैराग्यनिमित्तात् प्रत्यानीते प्रतिनिवर्तिते । दिवानिशं विनोदनोपाये प्रवर्त्त्याशक्यतया निवर्तिते इत्यर्थः । चकितचकितमित्यन्यत्राप्यनुषङ्गः । वसन्तमहीरुहां कुसुम इति अतोऽपि (अतोऽपि?) दुस्सन्तरमेतदिति भावः । मधुकरविपक्षोभेण दर्शनोपक्रम एव पुष्पोपरि निचितस्य मधुकररूपस्य विषस्य क्षोभेण सञ्चलनेन तदवलोकनेनेत्यर्थः, क्लिष्टे क्षीणशक्ती । विषस्य दर्शनेऽपि पीडाकरत्वमिति दृशोर्विशेषणम् । कुसुमविशेषणत्वे मधुकराणां विषत्वारोपः क्लिष्टत्वं च न घटते । कथ पदं कुर्वीयातां दर्शनस्याप्यविषये कथं विनोदः सिध्यति । सखे! इति वस्तुवृत्तं जानतस्तवैवमशक्यप्रेरणं न युक्तमिति भावः ॥ ७ ॥ प्रियतमानिरीक्षणोपाय एव चिन्त्यतामित्यनेन निरीक्षणाभाव एव सन्तापहेतुरिति प्रकाशितम् ॥

---

१. 'वयस्य अ' ख. पाठः

---

‡. 'अतिदुष्करमुपन्यस्तम्' इत्यस्य स्थाने 'अशक्यारम्भोऽयं विनोदः' इत्येवंजातीयः कश्चिद् व्याख्यानुगतः पाठः स्यात् .

**विदूषकः** — (क) भो वअस्स! सा वि तादिसं पदेसंतरं उवअदत्ति मए सुदं, जहिं पवणस्स वि णत्थि पसरो । ता छिंदीअदु एसो पक्खो । अण्णं पुण कं पि उवाअं मे पण्णाचक्खू दक्खइ । जइ सद्धा, तं सुणाहि ।

**धनञ्जयः** — (सप्रत्याशम्) सखे! कथ्यताम् ।

**विदूषकः** — (ख) अत्थि किळ सग्गसारं दामोदरेण अवहुणिअ महीदं आणीदो कामप्पदो रुक्खविसेसो । तं पत्थिअ एक्कं सुहद्दं याचह्म ।

**धनञ्जयः**—मूर्ख! किं नाम तादृशं कन्यारत्नं सोऽपि पारिजातः प्रसूते । तत् किमेभिर्नर्मप्रलापैः । दुर्निवारनिर्गमा इवामी प्राणाः ।

---

(क) भो वयस्य! सापि तादृश प्रदेशान्तरमुपगतेति मया श्रुतं, यस्मिन् पवनस्यापि नास्ति प्रसरः । तत् छिद्यतामेष पक्षः । अन्य पुनः कमप्युपाय मे प्रज्ञाचक्षुः पश्यति । यदि श्रद्धा, त शृणु ।

(ख) अस्ति किल स्वर्गसार दामोदरेणापहृत्य मह्यामानीतः कामप्रदो वृक्षविशेषः । त प्रार्थ्यैकां सुभद्रा याचावहे ।

---

तत् प्रतिक्षिपति नर्मालापपूर्व छिद्यतामेष पक्ष इत्यादिना । एष पक्षः दर्शनपक्षः । अतः परमदृश्येत्यर्थः । द्रष्टुं न शक्या यत्र पवनस्यापि न प्रसरस्तादृशं प्रदेशान्तरं गतेति नैराश्यसम्पादनायोक्तिः । दुर्लभे किं प्रयत्नेनेति भावः ॥

**अस्ति किलेत्यादिना** नर्मालापेन सन्तापपरिपोष एव सम्पादितः ॥

'शृङ्गारानुकृतिर्या तु तद्धास्यमिति गीयते' इत्युक्त्या विप्रलम्भे तत्पोषकत्वं हास्यवचनस्य । तदेवोक्तम् 'अलमेभिर्नर्मप्रलापैरि'ति ॥

---

१. 'र्म प्र' क. पाठः.

**विदूषकः**---(ससम्भ्रमम्) (क) मा खु मा खु अमङ्गळं भणिअ। संठावेहि अत्ताणं।

**धनञ्जयः**---सखे! सोऽयमशक्यारम्भस्ते नियोगः। कुतः---

मलयशिखरजातैर्मारुतैर्दूरशुष्कं
हिमकरकरजालैः पीडयद्भिः प्रपिष्टम्।
कथय मदनबाणैर्नो गवाक्षीकृतायाः
कथमिव मम तन्वा निष्पतेत् प्राणचूर्णम्॥ ८॥

**विदूषकः**---(सविषादमात्मगतम्) (ख) पच्छिमं अवत्थं पडिवज्जिदुकामो विअ एसो पळवदि। अण्णं च एरिसो एदस्स संमोहो, जं अदिक्कंदं पि सञ्झं ण पडिवज्जइ। किं मए

---

(क) मा खलु मा खल्वमङ्गलं भणित्वा। संस्थापयात्मानम्।

(ख) पश्चिमामवस्थां प्रतिपत्तुकाम इवैष प्रलपति। अन्यच्चेदृश एतस्य सम्मोहः, यदतिक्रान्तामपि सन्ध्यां न प्रतिपद्यते। किं मया कर्तव्यम्। एवं तावद्भणिष्यामि।

---

मलयशिखरजातैरित्यादिना प्राणानां लतापत्रादिवन्मूर्तत्वमारोपितम्। चूर्णत्वसमर्थनमुद्दीपनप्रकर्षेणानिवार्यगमनत्वं प्रकाशयितुम्। दूरशुष्कं भृशं परिशोषं नीतमित्यर्थः। हिमकरकरजालैश्चूर्णीकृतम्। तदानुगुण्येन पीडयद्भिरित्युक्तम्। अत्र शोषणे पेषणे च कर्तृभेदेन बहुत्वेन च लतापत्रादीनामिव झटिति चूर्णीकरणयोग्यत्वं प्रकाशितम्। यथा एकैः शोषं नीयन्ते, अन्यैश्चूर्ण्यन्ते। गवाक्षीकृतायाः निरन्तररन्ध्रीकृताया इत्यर्थः। अनेन झटिति निष्पतनस्यानिवार्यत्वं प्रकाशितम्। प्राणचूर्णं शुष्कमित्यादि। ओदनं पचतीतिवद् व्यवहारः॥ ८॥

एवमुद्दीपनैरश्रुरोमाञ्चनिःश्वासादिभिरन्तरान्तरा गृहीतमुक्तैश्चिन्तादैन्यादिभिश्च भावै रतिपरिपोषेण विप्रलम्भस्य परकाष्ठायां प्राणपतनप्रकाशनावधि प्रकाशि-

---

१. 'भणादि' रा. पाठ.

कादव्वं। (विचिन्त्य) एव्वं दाव भणिस्सं। (प्रकाशम्) भो! कीस अआरणे अत्ताणं आआसेसि, जं वासुदेवेण[1] सुभद्दा दिण्णत्ति सअं एव्व कहेसि[2]। सा वि साणुराआ तइ त्ति जाणासि[3] एव्व। अप्पच्चणीअं च दे बाहुबळं पच्चोसि। को विअ एसो सम्मोहो। ता मा सन्तप्प। इदाणिं पुण कञ्चणकमळवाविआतीरगअं[4] सहआरळदामण्डवं गच्छह्म। तत्थ गअस्स दे मिणाळळदिआतरङ्गाणिळादिहिं सुहअरो[5] सिसिरोवआरो। ता तहिं एव्व गच्छह्म।

---

भोः! कस्मादकारण आत्मानमायासयसि, यद् वासुदेवेन सुभद्रा दत्तेति स्वयमेव कथयसि। सापि सानुरागा त्वयीति जानास्येव। अप्रत्यनीकं च ते बाहुबलं प्रत्येपि। क इवैष सम्मोहः। तद् मा सन्तप। इदानीं पुनः काञ्चनकमलवापिकातीरगतं सहकारलतामण्टपं गच्छावः। तत्र गतस्य ते मृणाललतिकातरङ्गानिलादिभिः सुखकरः शिशिरोपचारः। तत् तत्रैव गच्छावः।

---

तायां नर्मसचिवमुखेन तच्छमनं प्रकाशयति – किमकारण इत्यादिना। सहकारलतामण्डपं गच्छाव इत्यनेनादर्शनेन परिपोषं नीतस्य सन्तापस्य दर्शनोपायसिद्ध्या शमनोपायः प्रकाशितः कविना ॥

एवं नायकस्यायोगविप्रलम्भं परिपोषं नीत्वा नायिकायाः पुरुषत्रयक्रमेण रतिभावस्योद्वन्धनपर्यन्तं परिपोषं वर्णयितुमुपक्रमते। तत्र कुलपालिकायास्त्रिपुरुषानुरागस्यानौचित्यम्। तदेव रसभङ्गहेतुरिति चेत्, तन्न। सामाजिकानां तथा न प्रतीतिः। इयमेकमेव त्रिशाखतया सङ्कल्प्यानुरागपरवशा भवतीति रत्युद्दीपनानुभावव्यभिचारिपरम्परया तस्यास्त्रिशाखतया रतिपरिपोषे त्रिशाखस्य रसप्रवाहस्य पुनरेकीभावमुपगमिष्यतोऽनुभूतिरेव तेषां भवति। तस्या एवानौचित्यबुद्धिः। सा

---

१. 'भद्देण' ख. पाठः. २. 'हि' क पाठ.. ३. 'णिजइ ए' ख. पाठः. ४. 'वावीस' क. पाठ.. ५. 'सुअरं सो सि क. पाठः.

**धनञ्जयः** --- (निःश्वस्य) यद् भवते रोचते । (विदूषकांसावलम्बी खेदालसं परिक्रामति)

(ततः प्रविशति दुस्सहमदनातङ्का सुभद्रा)

**सुभद्रा**[1] --- (सवाष्पम्) (क) पाणा ! कीस मं परिच्चय्य गच्छह ।

**विदूषकः** --- (कर्णं दत्त्वा) (ख) एदस्सिं सहआरळदामण्डवे किस्से वि इत्थिआए विहुरो आळावो सुणीअदि । ता ओवारिअसरीराओ पेक्खह्म[2] का एस त्ति ।

**धनञ्जयः**—सखे ! एवं कुर्मः । (तथा कृत्वा पश्यन्) सखे ! पश्यपश्य —

---

(क) प्राणा ! कस्मान्मां परित्यज्य गच्छथ ।

(ख) एतस्मिन् सहकारलतामण्डपे कस्या अपि स्त्रिया विधुर आलापः श्रूयते । तदपवारितशरीरौ पश्यावः कैषेति ।

---

च वैराग्यपरिपोषजननेन मरणान्तिकीमवस्थां प्रयोजयति, अन्त एकत्वनिश्चयेनानन्दपरिपोषहेतुश्चेति न विरोधः । अथ सा अनगमूलसङ्कल्पपरम्परानुगुण्येन क्रमेण वर्धमानोत्कण्ठा, प्रतिक्षणरणरणकनिःश्वाससन्तम्भरोमाञ्चस्वेदवेपथुप्रभृतिविकारविवशाभिलाषविप्रलम्भस्य दशमीमवस्थां प्राप्तुमुद्यता निजानेव प्राणान् सम्मुखीकृत्य कथयति—पाणा! इत्यादि । कस्मान्मां परित्यज्य गच्छथ । प्राणा इति । स्पन्दमात्रमपि युष्मान् विना मम न सभवति । किं पुनरन्यत् । एवं स्थिते मां परित्यज्य कस्माद् गच्छथ । गन्तुमुपक्रम एव मया ज्ञायते । अत एवानिच्छया परित्यागः कल्प्यते । अतो निरपराधा युष्मद्विधेया क्षणमपि वियोगमजानतीं केन हेतुना परित्यज्य गच्छथ । परित्यागहेतुर्मम दोषः कथ्यतामिति प्राणान् परीहत्य विविक्ते क्रमेण प्रलपनम् ॥

---

१. 'द्रा-रा' रा. पाठ. २. 'द्' रा. पाठ

श्रमजलजटिलकपोलं बाष्पाम्बुप्रकरसिक्तनेत्रान्तम् ।
विधुरं मम खलु हृदयं दीर्घश्वसितं तदेवेदम् ॥ ९ ॥

विदूषकः—(क) दिट्ठिआ अबुद्धिपुरुवा वि मे णीदी एदस्सिं दसाअं वि पाणसंसआदो तुमं ओवाहेदि, बुद्धिपुरुवा उण सङ्गमं वि कदाइ संपादेदि त्ति तक्केमि ।

सुभद्रा—(ख) किं मण्णह, ण तुए भिण्णचारित्ताए सह वसामो त्ति । का णाम तेळ्लोक्केक्कधणुद्धरे महिन्दतणए महिन्दा-

(क) दिष्ट्याबुद्धिपूर्वापि मे नीतिरेतस्यां दशायामपि प्राणसंशयात् त्वामपवाहयति, बुद्धिपूर्वा पुनः सङ्गममपि कदाचित् सम्पादयतीति तर्कयामि ।

(ख) किं मन्यध्वे, न त्वया भिन्नचारित्रया सह वसाम इति । का नाम त्रैलोक्यैकधनुर्धरे महेन्द्रतनये महेन्द्रानुजमित्रे रूपविहसितमन्मथेऽर्जुनेऽनुरागस्य वचनी-

श्रमजलेत्यादि । जटिलो विषमितः । नेत्रान्तो नेत्रस्वरूपम् । तद् हृदयमेवेति हृदयविश्रान्तिधामनि हृदयत्वाध्यवसायोऽनन्यकामित्वप्रकाशनाय, हृदयमेवैव विग्रहवत्, न त्वस्मिन् विग्रहे हृदयप्रवृत्तिः । अत एवाभेदाध्यवसायः । दीर्घं श्वसितं यस्येति बहुव्रीहिः । तदेवेति सुभद्राशब्दश्रवणादारभ्य तत्तदवस्थाविशिष्टं कान्तास्वरूपं परामृशति ॥ ९ ॥

अबुद्धिपूर्वापीत्यादिना नायकस्य प्रहर्षलाभानुगुण्येन प्रहसनोक्तिः । प्राणसंशयात् त्वामपवाहयतीत्यनेनादर्शनकृतस्य सन्तापस्य प्राणसंशयावधिः परिपोषः प्रकाशितः । अत एव विप्रलम्भखेदं समाप्य सम्भोगवीथीसङ्क्रमणानुगुण्येन हर्षप्रकाशनम् ॥

किं मण्णहेत्यादि । तत्रायोगविप्रलम्भस्याभिलाषचिन्तास्मृत्याद्यनुसरणक्रमेण दशमीमवस्था मरणरूपा प्राप्तुमुद्यतायाः प्राणान् प्रति प्रलापप्रकाशने चिन्ता-

1. 'र्घं नि श्वसि' क. पाठः.

णुअमित्ते रूवविहसिअवम्महे अज्जुणे अणुराअस्स वअ-णीअदा। भूदहत्थादो तुह्माणं परिक्खए तस्सिं महाणु-हावे तुह्मेहिं ण दूसणीओ सिणेहो। जो उण अजोग्गे आअन्तुए पव्वजिदे दिढबद्धमूळो अप्पडिआरो *अहि-ळासो, तहिं अणुत्तरह्मि। तण्णिमित्तं जहेट्ठं गच्छह।

---

यता। भूतहस्ताद् युष्माक परिरक्षके तस्मिन् महानुभावे युष्माभिर्न दूषणीय' स्नेहः। यः पुनरयोग्ये आगन्तुके प्रव्राजिते दृढबद्धमूलोऽप्रतीकारोऽभिलापः, तत्रानुत्तरास्मि। तन्निमित्तं यथेष्ट गच्छत।

---

निःश्वासविषादाश्रुवैस्वर्यादिभिः पारवश्यातिशयप्रकाशकः प्रयोगोऽनुसर्तव्यः। वागारम्भानुभावरूपेण प्रलापेन च तदेव प्रकाश्यते। त्वया भिन्नचारित्रया सह न वसाम इति किं मन्यध्वे इति सम्बन्धः। युष्माकं मत्परित्यागो नोचितः। परित्यागेऽपि वैराग्यनिमित्तं वक्तव्यम्। तन्न कथयथ। तथापि युष्मन्मनोवृत्तिमहमेवाशङ्क्य पृच्छामि। त्वया निर्मलकुलोद्भूतयापि तद्विरुद्धसमाचारया बहुपुरुषाभिलाषेण निरस्तसच्चरितया सह न वसाम इति किं मन्यध्वे। तत्र सर्वथा मयि दोषानारोप्य न परित्यक्तव्यम्। ममाभिलापविषयभूतान् विविच्य कथयामि। त्रैलोक्येत्यादि। अर्जुनेऽनुरागस्य का नाम वचनीयता। वचनीयता अपवादरूपता। तथा सति परित्यागो युक्त इति भावः। गुणबाहुल्येन निरपवादत्वं समर्थयति--त्रैलोक्येत्यादिना। वीरपुरुषप्रियाणां राजकन्यकानां भर्तृगुणेषु वीरत्वं प्रथममनुरागनिमित्तम्। तदस्मिन् परिपूर्णमित्येकधनुर्धरत्वेन वीरत्वनिर्देशः। त्रैलोक्ये, न तु भूमण्डलमात्रे। मध्यमाचिन' प्रधानधनुर्धरत्वं भुवनत्रयव्यापि। तथापि यतःकुतश्चिदुत्पन्नेनामुष्यायणत्वाभावेऽभिजन्मनिश्चयाभावात् कुलपालिकायाः परिग्रहायोग्यत्वमिति न न। महेन्द्रतनये। किमतः परं पितृगौरवं कथ्यतामिति भावः। तथापि

---

१. 'एदस्सि' क पाठः.

---

* 'अणुबन्धो' इति व्याख्यानुसारी पाठः.

• **धनञ्जयः**—(सहर्षं सरोमोद्गमं च) **अहोतुखल्वतिरमणीयोऽयमस्मद्भागधेयानां परिपाकः । अमुना पुनरेतानि स्नेहमयान्यक्षरा-**

मित्रबान्धवादिराहित्ये गृहिणीनामनिष्टावहमिति चेत्, तथा च न । महेन्द्रानुजमित्रे । मित्रस्यापि पितृगौरवसमानकक्ष्यत्वमधिकत्वं वा । तथापि कामिनीनां कामुकस्य सौरूप्याभावे यावज्जीवमन्तश्शल्यायमान व्यसनं भवेत् । तच्च न । रूपविहसितमन्मथे । सौरूप्यसाम्राज्याभिषिक्तस्य मन्मथस्यापहासे किमतः परं सौरूप्यं कथ्यतामिति भावः । अर्जुने इति । उपलक्षणत्वेनैव केषाञ्चिद् गुणानां निर्देशः । कियद्वा प्रत्येकं कथ्यताम् । भुवनप्रसिद्धेन नाम्नैवास्य सकलगुणसामग्र्यं युष्माभिरपि बोद्धुं शक्यम् । अनुरागस्य शैशवात् प्रभृति धनुर्धरत्वादिगुणश्रवणेन शरीरेण सह वर्द्धमानस्य पक्षपातस्य । का नामेति । गुणसामग्र्ये दोषशावल्य चेत् तद्द्वारा निरासो युक्तः, तदभावे न कापि वचनीयतेति क्षेपे किंशब्दः । अत्र भ्रमेण युष्माकमनिश्चयेऽपि न संवदामि । अतस्तन्निमित्तं भिन्नचारित्रताशङ्कया परित्यागो न युक्त इति भावः । पुनर्भूतहस्ताद्, न तु भूतसमीपात् । तत्करगतानां युष्माकं परित्रातरि । तस्मिन् युष्मदनुभवसिद्धे । महानुभावे महानुभावत्वमनेनैव ज्ञातुं शक्यम् । स्नेहः युष्मत्परित्राणप्रेरितैः सौजन्यबुद्धिजनित आस्थाविशेषः युष्माभिर्न दूषणीयः । युष्माभिरिति । अन्ये दूषयन्तु, युष्माकमियमस्मत्त्रातारं स्निह्यतीत्यादर एव युक्तः, (न) तन्निमित्तं परित्यागः । यः पुनरिति पूर्वोक्ताभ्यामस्यातीव भेदः, यतः सर्वथायोग्ये । यत आगन्तुके यतःकुतश्चिदभ्यागते परिचयवशान्मनश्चलितमित्यपि न वक्तुं शक्यम् । प्रव्रजित इति सर्वातिशायी दोषः । तत्रापि भ्रमेण मनः प्रसृतं, तदनौचित्यनिरूपणे निवर्तितमिति चेन्नातीव दोषः । तथा च न । दृढबद्धमूलः दृढम् अचलनीयं यथा भवति तथा स्थिरः । अप्रतीकारः अनुकूलयोपि क्रियया शमयितुमशक्यः । अनुबन्धो रागः । वर्तत इति शेषः । तन्निमित्तं तमेकमेव निमित्तीकृत्य, न त्वन्यदत्र निमित्तं ग्राह्यम् । अत्राहमनुत्तरास्मि अत्र मे न गुणसमर्थने निर्बन्धः । तद् यथेष्टं गच्छत, न निवारयामि ॥

एवमात्मानुरागविवशाया नायिकायास्त्रिधा सङ्कल्प्यापि निजगुणवर्णनरसरूषितं प्रलापवचनमाकर्ण्य नायकः प्रहर्षेण स्वभाग्याय श्लाघते—**अहोतुखल्वि-त्यादिना** । एतदतीवाश्चर्यम् । अस्मद्भागधेयानाम् एकफलोद्देशेन समार्जितसुकृत-

१. 'त. स्वाजन्यसौ' ख. पाठ.. २. 'या प्रतिकूलयापि' ख. पाठः. ३. 'मावाज' ख. पाठः.

मृतानि श्रावयता कन्दर्पेण प्रमृष्टानि पूर्वकृतान्यागांसि ।

(पुनः सस्पृहमवलोकयन्) अयि मुग्धे !

अस्यामुल्लसदूर्मिभङ्गकलिकाक्लृप्तप्रभेदः प्रिये !

वाप्यामेष परिस्फुरत्प्रतितनुः सूतिः सुधानामिव ।

शतममेधितानां भाग्योदयानां तत्तत्सुकृतानुगुण्येन बहुशाखानां परिपाकः एकीभूय फलोपभोगोन्मुखत्वम् । अतिरमणीयः, एव रमणीयो न कस्यचित् कदाचित् कोऽपि सुकृतपरिपाकः । अयमिति । एतदनुरागप्रकर्षोद्बोधकगुणवर्णनश्रवणादिफलोदयेनातिपरिस्फुटस्यावाग्गोचरवैभवस्य भाग्यपरिणामस्यान्यथानुपपत्त्यानुमेयस्वरूपस्यातिरमणीयत्वमेव वक्तुं शक्यम् । अत एवाश्चर्यसीमानमधिवसति । अमुना पुनरिति दिवानिशमस्मत्सन्निधिममुञ्चता । पुनरिति अनुकूलकक्ष्याप्रवेशेन पूर्वकालतो विशेषः । एतानि अनुभूयमानानि । स्नेहमयानि स्नेहप्रेरितत्वात् तद्रूपाण्येव । अक्षरामृतानि अमृतायमानानि (अक्षराणि) न तु पदानि अक्षराणामेवामृतरसरूपितत्वं, किं पुनः पदानां वाक्यानां वेति भावः । श्रावयता निजशरशकलीकृतस्वान्तं मामासितुमप्यसमर्थमिमं प्रदेशमानीय श्रोतृत्वमापाद्येमामपि ग्रहग्रस्तामिव बहुप्रकारं भ्रमविवशीकृतां प्रलापोन्मुखीं विधाय श्रावयता । कन्दर्पेण श्लाघ्यनामधेयेन । पूर्वकृतानि इतः पूर्वं तदातदा सकलेन्द्रियव्यामोहजननेनोपचितान्यागांसि निरवशेषं प्रमृष्टानि । प्रमृष्टानीति आगांस्यप्यनुग्रहनिमित्तान्येवेतीदानीं स्फुरति । एवं प्रहर्षपरकाष्ठामवलम्बमानः सौजन्यप्रकर्षेण स्वयमेव तां सम्बोधयति—अयीत्यादिना । मुग्धे ! इति अतिलोभनीयानां प्राणानां परित्यागोन्मुखत्वं मौग्ध्यमेव । किञ्च वयोवस्थासमुचितं तव मौग्ध्यं शोभतेतराम् । मम धन्यताप्रकर्षं त्वं बोधयामीत्यभिमुखीकृत्य सोऽयं जनः सुजन्मा । सः अन्यत् सर्वं परित्यज्य त्वत्प्राप्त्यर्थमेव यतमानो भ्रमेण बहुधा सङ्कल्प्य त्वदभिलापपरिग्रहस्य तत्तद्रूपेण विषयभूतः इदानीमीदृशानां वचनामृतानामास्वादनपात्रभूतः । अयम् इदानीं दरप्रसंगादिपात्रभूतः लोकोत्तर गौरवमापन्नो जनः सुजन्मा । अहमित्युक्ते पूर्वसिद्धस्वरूपमेव निर्दिष्टं भवेत् । तदिदानीन्तनस्य गौरवस्य नानुगुणमिति जनशब्देन परीकृत्य वचनम् । इदानीं लोकोत्तरमहिमान्य एवाहं जात इति भावः । तदाह—सुजन्मेति । अस्मज्जन्मैव शोभनम् । अन्येषामेवं लोकोत्तरजन्मकार्याला-

१. 'गुम्भ्' ख. पाठ. २. 'त्वा' ख. पाठ.

सङ्क्रान्तस्तव मानसाम्भसि मुहुः सङ्कल्पवीचीचयै-
र्मूर्छद्भिर्बहुधा भिदामुपगतः सोऽयं सुजन्मा जनः ॥ १० ॥

विदूषकः—(क) एसा दाव तुमं एक्कं एव्व तिहा करिअ कामेदुं

(क) एषा तावत् त्वामेकमेव त्रिधा कृत्वा कामयितुं प्रवृत्ता । त्वयापि कृतमेव

भेन जननस्य न शोभनत्वम् । अयं जनः सुजन्मैव अयमेव जनः सुजन्मेति निश्चीयते । तत्र हेतुं वाक्यार्थरूपेण प्रतिपादयति — तव मानसाम्भसि सङ्क्रान्तो मुहुर्मूर्छद्भिः सङ्कल्पवीचीचयैर्बहुधा भिदामुपगत इति प्रथममभेदारोपेण सन्वयः । मानसरूपेऽम्भसि सङ्क्रान्तः अनुसन्धानरूपं प्रतिफलनं प्राप्तः । अत्र मानसे शब्दशक्त्या सरःसाम्यं च स्फुरति । मुहुः पुनःपुनः । मूर्छद्भिः उपर्युपरि-प्रसरद्भिः । सङ्कल्पैरेव वीचीचयैः । सङ्कल्पानां वीचीचयत्वारोपः क्षणे-क्षणे उपर्युपरि प्रसरणेन । बहुधा भिदामुपगतः । अत्र जनस्य चन्द्रत्वारोप आर्थः । अत्र सङ्कल्पितरूपस्य त्रिशाखत्वेऽपि सङ्कल्पानां प्रकारभेदेन स्थानासनशयनाद्यवस्थाविशिष्टत्वेनैकस्यैव नानात्वं स्फुरति । अत एव बहुधेत्युक्तम् । चन्द्रबिम्बमपि वीचीपरम्परासु मालाकारेण स्फुरति । एवमभेदारोपे पुनर्भेदेन सादृश्यं प्रकाशयति — अस्यां वाप्यां परिस्फुरत्प्रतितनुः उल्लसदूर्मिभङ्गकलिकावल्गत्प्रभेदैः उल्लसन्तीनामूर्मीणां भङ्गः भञ्जनम् आवर्तनं, तत्कलिका समूहः, तत्र वल्गत्प्रभेदः भञ्जनवतीषूर्मिपरम्परासु प्रसृतभिन्नरूपासु सुधासूतिरिव वर्तमानो जन इत्युपमानस्य विश्रान्तिः । सुजन्मेति विश्रान्त्ययोगाद् भेदोपगमनस्य बिम्बप्रतिबिम्बभावेन निर्देशादत्र साम्यप्रकर्षविवक्षयाभेदारोपः क्रियते । तत्र मानसस्याम्भस्त्वारोपणं, सङ्कल्पानां वीचीत्वारोपः, जनस्यार्थतश्चन्द्रत्वारोपश्च । एवमभेदे सिद्धे किं पुनः सादृश्यकथनम् । अत्र महाकवीनां स्वातन्त्र्यमेव शरणम् । भेदेन कथितस्याभेदारोपो न युक्तः, अभेदेन कथितस्य भेदोऽपि न युक्त इति न नियमः, विवक्षानुसारेणोभयप्रवृत्तेः ।

"राक्षसेन्द्रमहासर्पं स रामगरुडो महान् ।
उद्धरिष्यति वेगेन वैनतेय इवोरगम् ॥" (सुन्द. का. २१सर्ग. २७श्लो.)

इति श्रीरामायणे प्रयोगः । एवमात्मनः सुजन्मत्वहेतुः समर्थितः ॥ १० ॥

एसा दाव इत्यादिना प्रहसनेन सम्भोगवीथीप्रवेशोपक्रमस्य शोभां करोति ।

१. 'दः उपमानस्य सान्निध्येन पुन. सादृश्यकथनरसिकतया भेदकथनम् अत एवास्यामेव इत्युपमानं साक्षात्कृत्य कथनम् । उल्लसदूर्मिभङ्गकलिकाकुलप्रभेदः उल्लसन्ती' रा. पाठः,

पवुत्ता। तुए वि किदं एव्व परिणअणं। अदो वरं पुण जइ मत्तो एक्कं उवदेसं सुणिअ पवुत्तेसि, तदो णिरुवद्दवो दे कामो।

धनञ्जयः—(सस्मितम्) सखे! उपदिश्यतां तावत्।

विदूषकः—(क) जइ एसा पआसं इन्दप्पत्थं णीअदि, तदो सो धम्मपिसाओ सा अ वुड्ढा तुह बाहुबळणिज्जिदाअं तत्त-होदीअं दोवदीअं विअ एदाअं वि दाराविभाअं करेन्ति। तुवं पुण जेट्ठस्स जणणीए अ सासणं अणणुचिट्ठिअ[1] ण चिट्ठसि। ऐव्वं[2] च अदिसङ्कडे पडिस्ससि। ता जह ण को वि इमं पेक्खदि, तह एक्काअं मञ्जूसिआअं णिक्खिवि-अ अत्तणो[3] णाममुद्दं दइअ णेहि णं।

धनञ्जयः—वैधेय! गुरूनप्यधिक्षिपसि।

---

परिणयनम्। अतः परं पुनर्यदि मत्त एकमुपदेशं श्रुत्वा प्रवर्तसे, ततो निरुपद्रवस्ते कामः।

(क) यद्येषा प्रकाशमिन्द्रप्रस्थं नीयते, तदा स धर्मपिशाचः सा च वृद्धा तव बाहुबलनिर्जितायां तत्रभवत्यां द्रौपद्यामिवैतस्यामपि दारविभागं कुरुतः। त्वं पुनर्ज्येष्ठस्य जनन्याश्च शासनमननुष्ठाय न तिष्ठसि। एवं चातिसङ्कटे पतिष्यसि। तद्यथा न कोऽपीमां पश्यति, तथैकस्यां मञ्जूषिकायां निक्षिप्यात्मनो नाममुद्रां दत्त्वा नयैनाम्।

---

"शृङ्गारानुकृतिर्या तु तद्धास्यमभिधीयते" इति हास्यस्य शृङ्गारपोषकत्वात्॥

---

१. 'अणुचिट्ठि' क. पाठः. २ 'ता अ' ख. पाठः. ३. 'णं मु' क. पाठः.

**सुभद्रा**—(सबाष्पगद्गदम्) (क) जाव सहीओ आअच्छिअ मम मरणववसाअविग्घं उप्पादेन्ति, ताव एदं बहुपुरुसाभिळासपंसुळं पावसरीरं परिच्चइस्सं । (प्रस्थातुमिच्छति)

**धनञ्जयः**— का नामात्र प्रतिपत्तिः ।

(ततः प्रविशतश्चेट्यौ)

**चेट्यौ**— (उपसृत्य सप्रणामम्) (ख) अवि सुहं भट्टिदारिआए ।

---

(क) यावत् सख्यावागत्य मम मरणव्यवसायविघ्नमुत्पादयतः, तावदेतद् बहुपुरुषाभिलाषपांसुल पापशरीर परित्यक्ष्यामि ।

(ख) अपि सुख भर्तृदारिकायाः ।

---

अथ मरणान्तिकीमवस्थां गता नायिका वैवश्येन प्राणान् प्रति प्रलपन्ती मरणायाध्यवस्यति—**यावदित्यादिना** । यावत् सख्यावागत्य मम मरणव्यवसायविघ्नमुत्पादयतः उत्पादयिष्यत इत्यर्थः । सख्यावित्यनेन शीघ्रमागमनं प्रकाशितम्, तयोः सदा सहवर्तमानत्वात् । आगत्य विघ्न कुरुत इत्यनेनागमनमेव विघ्नहेतुः, न क्रियान्तरमिति सम्भ्रमोऽपेक्षितः । यावदुत्पादयत इति 'यावदादिशती'तिवत् प्रयोगः । तावत् ततः प्रागित्यर्थ. । यावत्तावदिति विघ्नोत्पादनस्य प्राणपरित्यागस्य च यौगपद्यं न घटते । ततः प्रागित्येव फलितम् । तदागमनस्य वेगं निरूप्य ततः प्राङ् निर्वोढव्यमिति त्वरा सूचिता । नञ्विशिष्टे पाठे एवं सम्भ्रमो न प्रकाशते 'जावदाशु विहिते'त्युक्तवत् । बहुपुरुषाभिलाषपांसुलमिति पापत्वे हेतुः, पापत्वं परित्यागस्य ।

"यावत् तस्याम्बिका शिरः ।
छिनत्ति तावत् पुरुषः खड्गपाणिरदृश्यत ॥"

इति च देवीमाहात्म्ये प्रयोग' । प्रस्थातुमिच्छतीत्यनेन च त्वरा सूचिता ॥

**प्रतिपत्तिः** प्रवृत्तिः ॥

तदानीमुद्यमभङ्गार्थं चेट्योः प्रवेशः । **आपि सुखं भर्तृदारिकाया इति** ।

---

1. 'ग घ ण उ'क. पाठ .

**सुभद्रा**--(स्वगतम्) (क) हद्धि सङ्किद एव्व ठाणे पडिदह्मि। (प्रत्यक्षम्) सहीओ! किं अज्ज तुह्मे आअदाओ, जेण अपुव्वं विअ मे सुहवुत्तन्तं पुच्छह।

**विदूषकः**---(ख) भो! पडिवत्तिमूढाणं अह्माणं बुभुक्खिआणं विअ पाअसं उवट्ठिदाओ चेडीओ।

**धनञ्जयः**— (सानन्दम्) सखे! सत्यमाभ्यां कृच्छ्रादुत्तारितौ स्वः।

**कल्पलतिका**— (ग) पसीददु पसीददु भट्टिदारिआ। उवणदं भट्टिदारिआए सुहं अवहारिअ अह्मेहि किं सुहं त्ति पुच्छिदं।

**सुभद्रा** --(घ) किं मे उवणदं सुहं।

---

(क) हा धिक् शङ्कित एव स्थाने पतितास्मि। सख्यौ! किमद्य युवामागते, येनापूर्वमिव मे सुखवृत्तान्तं पृच्छथः।

(ख) भोः! प्रतिपत्तिमूढानामस्माकं बुभुक्षितानामिव पायसमुपस्थिते चेट्यौ।

(ग) प्रसीदतु प्रसीदतु भर्तृदारिका। उपनतं भर्तृदारिकायाः सुखमवधार्यावाभ्यां किं सुखमिति पृष्टम्।

(घ) किं मे उपनतं सुखम्।

---

यन्निमित्तेनानुरागेण तस्या नायिकाया वैवश्यं, तस्याप्यनुरागे प्रकाशित एतस्याः सन्तापस्योपशमो भवेदितीयन्मात्रं निरूप्य ताभ्यां गमनसमय एव वक्रोक्त्या अपि सुखमिति पृष्ट, न तु तत्कृतः कलङ्को निरूपितः॥

शङ्कित एव स्थाने पतितास्मीति। सख्यौ विघ्नमुत्पादयत इति निरूपितं, तदेवापतितमित्यर्थः। तां वक्रभणितिमजानाना सामर्षमाह—किमद्य युवामागते। दूरदेशादिति शेषः। अपूर्वमिव अज्ञातपूर्वमिव॥

तदनिष्टं निरूप्य 'प्रसीदत्वि'त्यादिना स्पष्टोक्तिः॥

---

१. 'दंवा' क. पाठ.

**षट्पदिका**--(क) भट्टिदारिए[1]! दाणिं तुह पादमूळं उवसप्पिदुं आअच्छन्तीहि अह्मेहि तहिं माहवीळदामण्डवे भट्टिदारिअं अन्तरेण तेसं भअवन्दाणं तस्स गत्तिआचोरस्स[2] अ वम्महामअपिसुणं आळावं सुणिअ दूसहाए एदेसं दसाए अदिळहुई भट्टिदारिआए कामपीड[3]त्ति चिन्तिअं ।

**विदूषकः**[4]--(स्मृत्वा) (ख) भो गत्तिआचोर त्ति एदिणा उग्घादेण[5] सुमरिअं[6] । तहिं माहवीळदामण्डवे विसुमरिअं गत्तिअं गेह्णिअ आगमिस्सं । (निष्क्रान्तः)

---

(क) भर्तृदारिके! इदानीं तव पादमूलमुपसर्पितुमागच्छन्तीभ्यामावाभ्यां तत्र माधवीलतामण्डपे भर्तृदारिकामन्तरेण तेषां भगवतां तस्य गात्रिकाचोरस्य च मन्मथामयपिशुनमालापं श्रुत्वा दुस्सहाया एतेषां दशाया अतिलघ्वी भर्तृदारिकायाः कामपीडेति चिन्तितम् ।

(ख) भोः! गात्रिकाचोर इत्येतेनोद्घातेन स्मृतम् । तत्र माधवीलतामण्डपे विस्मृतां गात्रिकां गृहीत्वागमिष्यामि ।

---

दुस्सहाया एतेषां दशाया अतिलघ्वी । उभयोर्मदनावस्थानिरूपणेऽतीव गुर्वी तस्य पीडा । तद्गौरवे निरूप्यमाणेऽत्यल्पा तव पीडा । तत् परस्परानुरागे निश्चिते तदेव सुखनिमित्तमाश्रित्येदानीं सन्तापः सोढव्य इत्यभिप्रायेणावाभ्यां किं सुखमिति पृष्टम् ॥

उद्घातेन वचनोपक्रमेण ॥

---

१. 'ए! इदा' क. पाठः. २. 'स्स बह्मणस्स व' क- पाठः. ३. 'त्ति अह्मेहि चि' ख. पाठः. ४. 'क'—भो' ख. पाठः. ५. 'ग्घोसेण' इति मूलकोशयोः पाठः. ६. 'अं। मा' क. पाठः.

**सुभद्रा**—(सावज्ञम्) (क) किं एदिणा। ण दाव अहं तं भअवन्तं हेट्ठदोगईअं णिक्खिविअ अत्तणो वा ससङ्कणिम्मळं कुळं कळङ्कइस्सं। आमरणं पुण एदस्सिं दुक्खण्णवे णिमज्जन्ती चिट्ठामि। चिट्ठदु एदं। किं त्ति तुह्मेहि पुणो विळम्बिअं।

**धनञ्जयः**—(सबहुमानम्) अयि प्रेयसि! त्वया खल्वलङ्कृतमिदं यादवकुलम्। अपि च—

---

(क) किमेतेन। न तावदहं तं भगवन्तमधोगत्यां निक्षिप्यात्मनो वा शशाङ्कनिर्मलं कुलं कलङ्कयिष्यामि। आमरणं पुनरेतस्मिन् दुःखार्णवे निमज्जन्ती तिष्ठामि। तिष्ठत्वेतत्। किमिति युवाभ्यां पुनर्विलम्बितम्।

---

सावज्ञमित्यनेन तदुक्तावकर्तव्यबुद्धिः प्रकाशिता। तामेव स्फुटयति—**न तावदित्यादिना**। तावदित्यवधारणे। भगवतोऽपि मय्यनुरागः, तत् परस्परसङ्गमेन सुखं भविष्यतीति युवयोरभिप्रायः। तत्र दोषो न निरूपितः। अहं तं भगवन्तमित्यनेनोभयोरनौचित्यं प्रकाशितम्। अधोगत्यां निक्षिप्य निषिद्धाचरणेन पतितं कृत्वा। आत्मनः कुलं शशाङ्कनिर्मलम् इतःपूर्वमप्राप्तकलङ्कम्। आत्मनः कुलमिति कुलाभिमानः प्रकाशितः। अत एव तत्कलङ्कस्यासह्यत्वम्। वाशब्दः समुच्चयद्योतकः। उभयोरप्यधःपतननिमित्ते क्षणिकसुखे नाभिरुचिः। किं पुनः करिष्यसीत्यत्राह—आमरणमित्यादि। तिष्ठत्वित्यादिना तन्मतं निरस्याह—किमितीत्यादि। युवाभ्यां सदा सन्निधानयोग्याभ्यां केन निमित्तान्तरेण विलम्बनं कृतमित्यर्थः। तत्कथनं एतद्विसर्जनोपायो भवेदित्याशयः॥

अथ कुलाभिमानप्रकाशकं तद्वचनमाकर्ण्य सबहुमानमाह—**अयि प्रेयसीत्यादि**। एवं वदन्तीं त्वां कथं पदान्तरेण सम्बोधयामि। त्वया खल्वलङ्कृत त्वयैवालङ्कृतम्। कुलस्यैव शोभाहेतुस्त्वं, कुलकलङ्कपरिहारनिर्बन्धात्। अपि चेति अस्माकमपीदमेव प्रीतिकरं जातम्। यतः पूर्वं पूर्वक्षणे

**सुभद्रा**—(सावज्ञम्) (क) किं एदिणा। ण दाव अहं तं भअवन्तं हेट्ठदोगईअं णिक्खिविअ अत्तणो वा ससङ्कणिम्मळं कुळं कळङ्कइस्सं। आमरणं पुण एदास्सिं दुक्खण्णवे णिमज्जन्ती चिट्ठामि। चिट्ठदु एदं। किं त्ति तुह्मेहि पुणो विळम्बिअं।

**धनञ्जयः**—(सबहुमानम्) अयि प्रेयसि ! त्वया खल्वलङ्कृतमिदं यादवकुलम्। अपि च—

---

(क) किमेतेन। न तावदहं तं भगवन्तमधोगत्या निक्षिप्यात्मनो वा शशाङ्कनिर्मलं कुलं कलङ्कयिष्यामि। आमरणं पुनरेतास्मिन् दुःखार्णवे निमज्जन्ती तिष्ठामि। तिष्ठत्वेतत्। किमिति युवाभ्यां पुनर्विलम्बितम्।

---

सावज्ञमित्यनेन तदुक्तावकर्तव्यबुद्धि प्रकाशिता। तामेव स्फुटयति—न तावदित्यादिना। तावदित्यवधारणे। भगवतोऽपि मय्यनुराग, तत् परस्परसङ्गमेन सुख भविष्यतीति युवयोरभिप्राय.। तत्र दोषो न निरूपित। अहं त भगवन्तमित्यनेनोभयोरनौचित्य प्रकाशितम्। अधोगत्या निक्षिप्य निषिद्धाचरणेन पतित कृत्वा। आत्मन' कुल शशाङ्कनिर्मलम् इत पूर्वमप्राप्तकलङ्कम्। आत्मन कुलमिति कुलाभिमान. प्रकाशित। अत एव तत्कलङ्कस्यासह्यत्वम्। वाशब्दः समुच्चयद्योतक.। उभयोरप्यध पतननिमित्ते क्षणिकसुखे नाभिरुचि। किं पुनः करिष्यसीत्यत्राह—आमरणमित्यादि। तिष्ठत्वित्यादिना तन्मत निरस्याह—किमितीत्यादि। युवाभ्या सदा सन्निधानयोग्याभ्या केन निमित्तान्तरेण विलम्बन कृतमित्यर्थ.। तत्कथन एतद्विसर्जनोपायो भवेद्वेत्याशयः॥

अथ कुलाभिमानप्रकाशक तद्वचनमाकर्ण्य सबहुमानमाह——अयि प्रेयसीत्यादि। एव वदन्तीं त्वा कथ पदान्तरेण सम्बोधयामि। त्वया खल्वलङ्कृत त्वयैवालङ्कृतम्। कुलस्यैव शोभाहेतुस्त्व, कुलकलङ्कपरिहारनिर्बन्धात्। अपि चेति अस्माकमपीदमेव प्रीतिकर जातम्। यत. पूर्वं पूर्वक्षणे

रागप्रपञ्चपिशुनानि तथा न नाम
पूर्वं त्वया प्रणयपेशलमीरितानि ।
निर्वेदयन्ति रमयन्ति यथेदृशानि
चारित्ररूपितपदानि वचांसि चेतः ॥ ११ ॥

त्वया प्रणयपेशलमीरितानि वचासि तथा न[1] अरीरमन्निति शेषः । रागप्रपञ्चपिशुनानि रागप्रपञ्चस्य (पिशुनानि) । केनाप्यसाध्यमानः पक्षपातविशेषो रागः । तत्तद्गुणरूपादिवर्णनेषु सोऽभिप्रायरूपेण बाहुल्येन व्यज्यत इति प्रपञ्चग्रहणम् । केषाञ्चिद् वचासि प्रपञ्चरूपेऽप्यभिप्रायो लेशतः प्रकाशते, केषाञ्चिदल्पेऽपि वचस्यभिप्रायबाहुल्यं प्रकाशते, तादृशानीमानीति रागप्रपञ्चपिशुनानीत्युक्तम् । वचसि रागप्रपञ्चो वचनकौशलेनातितरां प्रकाशत इति प्रणयपेशलमित्युक्तम् । प्रणयेन रागप्रकर्षेण पेशलं सुन्दरं हृद्यतमं यथा भवति तथेरितानि । वचनादपि सगद्गदमधुरकाकुविशिष्टहेतुसुन्दरभणितिप्रकारस्य प्रीतिकरत्वं "तेन्छोदे"त्यादिना प्रकाशितम् । तथा न नाम सर्वथा न रतिकराणीति कथमुच्यते तारतम्यमेवात्र प्रतीयत इति तथा न नामेत्युक्तम् । नामेति एतदनङ्ग स्पष्टमभिधातु शक्यमिति भावः । यथेदृशानि वचांसि रमयन्ति, रतिकरत्वे अत एवाधिक्यमेतेषां, यतो निर्वेदयन्ति निर्वेदम् अनुचिताचरणे तत्पात्रतयात्मनि च वैराग्यमाप्नुवन्ति स्फुटं प्रकाशयन्तीति वचसां विशेषणम् । निर्वेदशब्दात तदाचष्ट इत्यस्मिन्नर्थे णिच विधाय प्रयोगः । पूर्वं रागप्रपञ्चपिशुनेभ्य इदानीं निर्वेदप्रकाशकानां रतिकरत्वमिति भावः । निर्वेदकराणीति पक्षे श्रोतॄणामस्माकमभिप्रायविरुद्धत्वादापाततो निर्वेदकरणयोग्यानीति योज्यम् । क्वचिद् भीषयत्ययमस्मानित्यत्र भयोत्पत्ति प्रत्यस्य प्रयोजकत्वमस्ति नास्माकं भयमिति साध्यते, तद्वदत्रापि । कथ साध्यविरुद्धानां रतिकरत्वमित्यत्राह — चारित्ररूपितपदानि चारित्रं चरितशुद्धिः अत्र कुलशुद्धिः तेन रूपितानि अनुबद्धानि पदानि येषु । न किमपि पदं चारित्रगौरवाप्रकाशकम् । ईदृशानीति "ण दाव अहं तं भअवन्दमि"त्यादीनि । ईदृशशब्देन न केवलमुक्तानि, अतः परमप्यभिजन्मभावनानि *भवतीवदनकमलविगलितानि वचनमकरन्दानि+ श्रोत्रपात्रेण पातुमेवास्माकमभिरुचिः, न श्रुतेरेवालभाव इति प्रकाशितम् ॥ ११ ॥

1. 'ना' ख. पाठ.

* भवतीशब्दे पुंवद्भावो युक्तः. + मकरन्दशब्दस्य पुंस्त्वं न्याय्यम्.

**षट्पदिका**---(क) ताव अ भट्टिणीपादेहिं आआरिअ आणत्तह्मि।° बाळिआ मम वअणेण वत्तव्वा वच्छा मे सुभद्दा। जइ तुमं अज्ज देहवुत्तिं ण करेसि, पुण अहं वि सरीरजत्तं ण करिस्सामि त्ति।

**सुभद्रा**---(स्वगतम्) (ख) सुट्ठु दाव एदं संवुत्तं। एदेण एव्व ववदेसेण एक्का णिग्गमणीआ। (प्रत्यक्षम्) हळा छप्पदिए! गदुअ विण्णवेहि, जह अम्बा आणवेदि त्ति।

**षट्पदिका**---(ग) अणुग्गहिदह्मि। (निष्क्रान्ता)

**सुभद्रा**---(स्वगतम्) (घ) एसा दाव कहं णिव्वासइदव्वा। होदु, एव्वं दाव भणिस्सं। (प्रत्यक्षम्) हळा कप्पळदिए! अदिदूसहो

---

(क) तावच्च भट्टिनीपादैराहूयाज्ञप्ते स्वः। बालिका मम वचनेन वक्तव्या वत्सा मे सुभद्रा। यदि त्वमद्य देहवृत्तिं न करोषि, पुनरहमपि शरीरयात्रां न करिष्यामीति।

(ख) सुष्ठु तावदेतत् संवृत्तम्। एतेनैव व्यपदेशेनैका निर्गमनीया। सखि षट्पदिके! गत्वा विज्ञापय यथाम्बाज्ञापयतीति।

(ग) अनुगृहीतास्मि।

(घ) एषा तावत् कथं निर्वासयितव्या। भवतु, एवं तावद् भणिष्यामि। सखि

---

तावच्चेत्यादि मध्येमार्गं भगवदालापश्रवणेनैव विलम्बनं न घटते, अन्यत् किं विलम्बनकारणमिति निरूप्य किमिति पुनर्विलम्बितमिति पृष्टं, तदवधार्योक्तिः। तावच्च यावद् भगवदालाप श्रुत्वैतो निर्गते, तदानीमेवेत्यर्थः। भट्टिणीपादेहि मात्रा। आआरिअ आहूय। आज्ञप्ते स्वः। बालिकेत्यादि तदुक्तिप्रकारः। देहवृत्तिः स्नानाशनादि॥

व्यपदेशेन छलेन॥

मम सन्दावो । अत्थि कोत्थुहसोदरेहि मोत्तिएहि अ-
मुअमएहि घडिओ सव्वसन्दावहरो त्ति किदणामहेओ
हारो । तं गह्लिअ आअच्छ ।

**कल्पलतिका**—(क) कहं एआइणीं भट्टिदारिअं उज्झिअ गमिस्सं ।

**सुभद्रा**—(सरोषम्) (ख) किं तुवं मं जीवन्तिं णेच्छसि ।

**कल्पलतिका**—(ग) का गई । जं भट्टिदारिआ आणवेदि । (अनिच्छन्ती निष्क्रान्ता)

**धनञ्जयः**—अये निर्जनीकृतोऽयं लतामण्डपः, आरब्धं मन्ये मरणायानया । भवतु । दृढपरिकरबन्धस्तदवहितस्तिष्ठामि ।

**सुभद्रा**—(समन्तादवलोक्य) (घ) दिट्ठिआ णिम्माणुसो अअं पदेसो । ण इदो वरं कामुम्मादे वन्धइत्तणे डोलाइस्सं । ता एद-

---

कल्पलतिके ! अतिदुस्सहो मम सन्तापः । अस्ति कौस्तुभसोदरैर्मौक्तिकैरमृतमयैर्घटितः सर्वसन्तापहर इति कृतनामधेयो हारः । तं गृहीत्वागच्छ ।

(क) कथमेकाकिनीं भर्तृदारिकामुज्झित्वा गमिष्यामि ।

(ख) किं त्वं मां जीवन्तीं नेच्छसि ।

(ग) का गतिः । यद् भर्तृदारिकाज्ञापयति ।

(घ) दिष्ट्या निर्मानुषोऽयं प्रदेशः । नेतः परं कामोन्मादे बन्धकीत्वे दोलायिष्ये । तदेतस्य बालसहकारस्य शाखावलम्बितयातिमुक्तलतया यथासमीहितं करि-

---

जीवन्तीं मां नेच्छसि मम जीवनं किं तव नापेक्षितं, तदपेक्षायां हारानयनाय गन्तुमेव युक्तमिति भावः ॥

दृढपरिकरबन्ध इति । मरणारम्भनिरोधायेति शेषः ॥

स्स वाळसहआरस्स साहावळम्बिदाए अदिमुत्तळदाए जहासमीहिदं करिस्सं। (लतामादाय बाष्पं मुञ्चन्ती) हा अम्ब! हा ताद! हा अय्य वळभद्द! हा मइ णिच्चबद्धजीविअसुह वासुभद्द! हा अम्ब जसोदे! हा ताद णन्दगोव! एसा अहं अणाहा विअ तुह्माणं दंसणसुहस्स अच्चन्दागोअरं पच्चिमं दसं पडिवज्जामि। हा अज्जुण! मणोरहदइअ! जम्मन्तरे वि अणण्णसाहारणाणुराआ तुज्झ पादसुस्सूसिआ भवेअं। (कण्ठे पाशमर्पयति)

**धनञ्जयः**—(ससम्भ्रममुपसृत्य लतापाशमाक्षिपन्)

वल्लीपाशैरलमलमदः पीडयित्वा मनोज्ञं
ग्रीवानालं तव तनुतरं चण्डि! गाढोपगूढम्।
कर्तुं वाञ्छन्ननुदिनमयं बाहुपाशो मदीय-
स्तत्रासक्तं न खलु सहते कर्कशं कालपाशम् ॥ १२ ॥

---

ष्यामि। हा अम्ब! हा तात! हा आर्य बलभद्र! हा मयि नित्यबद्धजीवितसुख वासुभद्र! हा अम्ब यशोदे! हा तात नन्दगोप! एषाहमनाथेव युष्माकं दर्शनसुखस्यात्यन्तागोचरा पश्चिमां दशां प्रतिपद्ये। हा अर्जुन! मनोरथदयित! जन्मान्तरेऽप्यनन्यसाधारणानुरागा तव पादशुश्रूषिका भवेयम्।

---

कामोन्मादे बन्धकीत्वे दोलायिष्य इति कामोन्मादस्यासह्यत्वे बन्धकीत्व बहुपुरुषपरिग्रहदोषोऽपि किं क्रियतामिति स्फुरति, दोषस्य गौरवे निरूप्यमाणे कामोन्मादः सोढव्य एवेत्युभयपक्षस्य गौरवेण चित्तस्यान्दोलनम्। देहपरित्यागे एव वैषम्य न भवेदिति भाव। अतिमुक्तलतया माधवीलतया। हा अर्जुनेत्यादि। अन्ययोरनौचित्यबुद्ध्या तदार्जुने विश्रान्तिः। अत एवानन्यसाधारणानुरागेत्युक्तम्॥

वल्लीपाशैरित्यादि। मनोज्ञं तनुतरमिति च पीडनायोग्यत्वे हेतुः। चण्डीति क्रूरकर्मप्रवृत्तत्वादधिक्षेपगर्भमुक्तिः। अनुदिनं गाढोपगूढं कर्तुं वाञ्छन्

• **सुभद्रा**—(सरोषम्) (क) को मम पणअभंगं करेदि । (पुनार्विलोक्य) भअवं एगो दे अञ्जळी । मा दाव इमिणा समअविरोहिणा वावारेण अत्तणो मुत्तिपहं दूसेहि । मम वि तिपुरुसपणअपापप्पडिआरं परळोअगइं ण पडिबन्धेहि ।

**धनञ्जयः**—अयि मुग्धे! अलमेभिरसन्मूलैः सङ्कल्पविकल्पैः ।

सार्धं प्रेम्णा स्तनसरसिजे प्रोद्गते यद्गतेन
त्वत्संस्पर्शात् पुलकितवपुर्यः प्रभासोपकण्ठे ।

---

(क) को मम प्रणयभङ्गं करोति । भगवन्! एष तेऽञ्जलिः । मा तावदमुना समयविरोधिना व्यापारेणात्मनो मुक्तिपथं दूषय । ममापि त्रिपुरुषप्रणयपापप्रतीकारं परलोकगतिं न प्रतिबधान ।

---

मदीयो बाहुपाशः तत्र स्वबन्धनीये आसक्त कालपाश न सहते । प्राणहरत्वात् कालपाश एवायम् । अतः स्वाभिप्रायविरोधिन तमाक्षेप्तुमेव प्रवृत्तः । बाहुपाशः कालपाशमिति सजातीयबलात्कारस्पर्धयेवेति प्रकाश्यते ॥ १२ ॥

**को ममेत्यादि** पारवश्येनानवलोक्य कथनम् । प्रणयभङ्गं प्रार्थनाभङ्गम् । मरण हि प्रार्थ्यते तन्निषेधमित्यर्थः । पुनर्भगवन्तमवधार्य स्वगौरवानुरूपं निषिद्धाचरणान्निवारयति—मा तावदमुना व्यापारेण "गाढोपगूढं वाञ्छन्ति"त्याद्युक्त्या प्रवृत्त्या चात्मनो मुक्तिपथं निवृत्त्येकशरण मा दूषय । मोक्षेच्छोस्तवाश्रमविरुद्धोऽयमाचारः । तव किमनेन क्षतमिति चेद्, ममापि त्रिपुरुषप्रणयपापप्रतीकारं त्रिपुरुषप्रणयरूपस्य पापस्य, त्रिपुरुषप्रणयकृतस्य वा पापस्य प्रतीकारम् । प्रतीकारान्तर न जानामि । सर्वथा देहस्त्याज्य इत्यध्यवसितां परलोकगतिं मरणं मा प्रतिबधान ॥

**अयि मुग्धे!** इति तव मौग्ध्यस्य विलसितमेतत् पापनिरूपणं प्रायश्चित्तविधानं च । एभि. सङ्कल्पविकल्पैः सङ्कल्पभेदैः अलम् । असन्मूलैर्निरालम्बनैः,

---

१. 'कम सरोमाञ्चम्) म' क. पाठ..

प्रव्रज्यायां प्रणयमकरोद् यश्च सम्प्राप्तये ते
मामेवामूनासितनयने! तानपि त्रीनवेहि ॥ १३ ॥

सुभद्रा—(सप्रमोदं स्वगतम्) (क) अम्मो एदे मम हिअआव्रहारिणो[2] दइओ धणञ्जओ एव्व संवुत्तो। (हर्षकम्पिताङ्गी) हद्धि, सोआदो विउणं असज्झवेदणा मे पीदी। सोए दाव पाणाणं परिच्चाए महन्तो पआसो किदो। एह्णिं पुण सअं एव्व णिग्गच्छन्ति विअ मे पाणा। (कथञ्चिदात्मानं धारयन्ती तिष्ठति)

(क) अम्मो एते मम हृदयापहारिणो दयितो धनञ्जय एव संवृत्तः। हा धिक्, शोकाद् द्विगुणमसह्यवेदना मे प्रीतिः। शोके तावत् प्राणाना परित्यागे महान् प्रयासः कृतः। इदानीं पुनः स्वयमेव निर्गच्छन्तीव मे प्राणाः।

भ्रमकृतैरित्यर्थः। विकल्पानामेव भ्रमरूपत्वं, न तु सङ्कल्पस्वरूपस्याधिष्ठाननिष्ठस्येति विकल्पैरित्युक्तम्। तद् बोधयति सार्धमित्यादिना। यद्वृतेन यद्विषयेण प्रेम्णा सार्धमिति "जम्मदप्पहुदी"त्यादिपूर्वोक्तमनुसृत्यानुवादः। प्रेम्णा सार्धमिति सहोक्त्या प्रेम्ण आबाल्यादेवोपक्रमात् क्रमोत्कर्षोऽविश्रान्तिश्च प्रकाश्यते। स एव पुलकितवपुः, प्रव्रज्यायां प्रणयमकरोच्चेति वक्तव्ये अनुवादकथनं बोध्यगर्भतया। पुलकितवपुरित्यस्य पूर्वं तत्सिद्धत्वमपि स्याद्, अन्यत्र त्वत्प्राप्तये प्रव्रज्यां कृतवानस्मीति बोध्यम्। तानिति त्वया त्रिधा समर्थितान्। अमूनिति त्रिपुरुषेत्याद्युक्त्येदानीमपि बुद्ध्युपारूढान्। त्रीनपि तव त्रिधा भ्रमविपर्यहेतूनित्यर्थः। एकमेवेति वक्तव्ये मामेवेत्युक्तं धनञ्जयत्वप्रकाशनेन। असितनयने इति अस्य लोकोत्तरस्य रूपस्य परित्यागोद्यमोऽतीवानुचित इति भावः। त्वत्प्राप्तये प्रव्रज्यायां प्रणयमकरोदित्यनेन विरुद्धाचरणेनापि साध्यसिद्धिर्भवत्विति प्राप्तौ निर्बन्धः प्रकाश्यते। ते तवैव नानुरागानुबन्धः, ममापि तथैवेति प्रवृत्त्या ज्ञाप्यतामित्यनुरागपरिपोषः प्रकाशितः ॥ १३ ॥

इति तदुक्त्यनुसारेण दयितो धनञ्जय एव संवृत्तः। हृदयापहारिण इति

१. 'एसो दाव मे' क. पाठः. २. 'रो द्' म. पाठः. ३. 'मः क' क. पाठः. ४. भूतानि' ख. पाठः.

(प्रविश्य हारहस्ता)

**कल्पलतिका**--(लतापाशमवलोक्य सविषादम्) (क) किण्णु खु भट्टिदारिआए ववसिदं । (सबाष्पं पादयोः पतति)

**सुभद्रा**--- (ससम्भ्रममुत्थाप्य) (ख) सहि! मा विसादं करेहि । (कर्णे) एव्वं विअ ।

**कल्पलतिका**--(ग) दिट्ठिआ जीवाविदह्मि भट्टिदारिआए । इमं दाव हारं विणा अण्णो को वि सव्वसन्दावहरो संवुत्तो । (पार्श्वमवलोक्य) जेदु कुमारो । (प्रणामं करोति)

**धनञ्जयः**—[२]प्रिये! मया किलायमनन्यजन्मा क्षत्रसमुचितेन गान्धर्वेण परिणयमार्गेण तव पाणिमग्राहयन् न विरमति । तदस्य परिपूर्यतामभिलाषः ।

(सुभद्रा सस्पृह धनञ्जयमवलोक्य दीर्घं निःश्वस्य बाष्पं मुञ्चन्ती तिष्ठति)

---

(क) किं नु खलु भर्तृदारिकया व्यवसितम् ।

(ख) सखि! मा विषाद कुरु । एवमिव ।

(ग) दिष्ट्या जीवितास्मि भर्तृदारिकया । अमुं तावद्धारं विनान्यः कोऽपि सर्वसन्तापहरः सवृत्त. । जयतु कुमारः ।

---

तत्कर्तृत्वेन त्रिधा विकल्पिताः । दयितो धनञ्जय इति औचित्येन प्रथमसङ्कल्पविषयभूतः । संवृत्त इति दैवादापतितमेतदिति प्रहर्षातिशयः प्रकाश्यते । शोकाद् द्विगुणमसह्यवेदना मे प्रीतिः शोकवेदनातो द्विगुणा वेदना भावस्य । प्रकर्षेण चित्तद्रुतिरूपस्य रणरणकस्योद्भवैः शोके हर्षे च भवति । शोके तादृश्या वेदनाया उद्भवेऽपि चित्तधारिणां प्राणानां प्रयाणे प्रयत्नः कृतः । इदानीं प्रीतिवेदनायां प्राणाः प्रयत्नं विना निर्गच्छन्ति । एवं शोके तावदिति वा पूर्वमिति वा पाठः ॥

---

१. 'जादो' क पाठ. २ 'दयिते । म' इति मूलकोशयो. पाठ'. ३. 'वः शोके ता' क. पाठः.

**धनञ्जयः**— (सवितर्कं स्वगतम्) ध्रुवमियं विना वासुदेवानुमतिमपा-[1] रयन्ती मत्प्रार्थनां परिपूरयितुमीदृशं वैधुर्यमवलम्बते । त-देवं तावत् । (प्रत्यक्षम्) प्रिये ! मा स्म विषीदः ।

जानन् नो दुर्दशामेतामभ्येत्य जनको मम ।
भ्रातरं वासुभद्रं ते सुत्रामा त्वां वरिष्यति ॥ १४ ॥

**सुभद्रा**— (जनान्तिकम्) (क) सहि ! दाणिं सङ्कडादो उत्तारिदह्मि ।

(माधवीधनञ्जयौ माधवमहेन्द्रौ ध्यायतः)

---

(क) सखि ! इदानीं सङ्कटादुत्तारितास्मि ।

---

एवमात्मबोधनेन[2] तस्याः प्राणत्यागनिरसनपूर्वं परमानन्दमापाद्य चिराभिलषितं स्वाभिप्रायं प्रार्थयते — प्रिये इत्यादिना । अयमनन्यजन्मा मया तव पाणिमग्राहयन् न विरमति किल नैव विरमतीति । एतदर्थमेवेयन्तं कालमस्य प्रयासः । त्वत्पाणिग्रहणे निर्वृत्तेऽस्य साफल्यं भवति । किलेत्यनेन मदनप्रेषितत्वं प्रकाश्यते । कथमिदानीं युज्यत इत्यत्राह — गान्धर्वेणेति —

"ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथासुरः ।
गान्धर्वराक्षसौ चान्यौ पैशाचश्चाष्टमः स्मृतः ॥"

एषु विवाहप्रकारेषु गान्धर्वः क्षत्रियस्योचितः । "अन्योन्यानुरागवतोः रहसि निर्मन्त्रः करस्पर्शो गान्धर्वः" इति तल्लक्षणम् । इदानीमेव तस्य सौकर्यं चेति गान्धर्वेणेत्युक्तम् ॥

दुर्दशां कार्यवैषम्यम् । वरिष्यतीत्यनेन कन्यादानस्य प्रार्थनापूर्वकत्वं प्रकाश्यते, "अन्नं विद्या तथा कन्या अनर्थिभ्यो न दीयते" इत्युक्तत्वात् ॥ १४ ॥

---

१. 'देवं' क. पाठ. २. 'त्मावबोधने त' ख. पाठ.

(ततः प्रविशति गालिकाहस्तः सम्भ्रान्तो विदूषकः)

**विदूषकः**—(सर्वतो विलोक्य) (क) भो पेक्खपेक्ख। एदे रक्खसा पिसाओ अ[1] आआसादो ओदरन्ति। एदे उड्डीअन्तो पासादं-[2] भूमीअं णिपडन्ति[3] । ता तुरिअं खेमअरं पदेसं गच्छह्म ।

**सुभद्रा**—(सभयम्) (ख) हद्धि, किण्णुखु एदं।

**धनञ्जयः**—भीरु ! मा भैषीः । स एष कौण्डिन्यस्य सम्मोहः । मन्ये स्मृतमात्रोपनतस्य पितुर्मे पाकशासनस्य समवतारपिशुनोऽयं दिव्यजनपरिच्छदः ।

(नेपथ्ये)

सह सुरवनिताभिर्लोकपालैर्मुनीन्द्रै-
रवतरति मरुत्वानम्बरादेष देवः।

**धनञ्जयः**—(आकर्ण्य) केनेदमावेदितम्[4] ।

(प्रविश्य)

**देवदूतः**—(सह सुरे[5]त्यादि पूर्ववत् पठित्वा अन्यतो विलोक्य)

---

(क) भोः पश्यपश्य । एते राक्षसाः पिशाचाश्च आकाशादवतरन्ति । एत उड्डीयमानाः प्रासादभूम्यां निपतन्ति । तत् त्वरितं क्षेमकरं प्रदेशं गच्छामः ।
(ख) हा धिक्, किन्नुखल्वेतत् ।

---

**उड्डीयमानाः** पक्षिवत् प्लवमानाः । प्रासादभूम्यां निपतन्तीत्यवतरणप्रकारकथनम् ॥

---

१. 'आ आ' ख पाठः　२ 'दग्गभू' ख ग पाठः　३ णिमण्णा प' ए. पाठः.
४. 'तम् । ततः प्रविशति दूतः । दू' ग. पाठः.　५ 'रेति प' क पाठः.

कतिपयपरिवारः कान्तिमानम्बुदश्री-
रयमयमभियातो वासवं वासुदेवः[1] ॥ १५ ॥

अपिच माधवीलतागृहे सम्भृते[2]विविधवैवाहिकोपकरणो होतुं सन्नह्यति भगवान् काश्यपः। इमां च माधवीं मङ्गलस्नानपुरस्सरमाकल्पविधानं कल्पयितुमाहूतवती जननी ते पौलोमी। त्वया च[3] पितरं प्रणम्य प्रस्तूयतां परिणयनविधिः।

धनञ्जयः--- यदाज्ञापयन्ति गुरवः।

देवदूतः—इतइतो भवती। (सपरिवारया सुभद्रया सह निष्क्रान्तः)

विदूषकः---(क) भो वअस्स ! किं एदं।

धनञ्जयः[4]---(सस्मितम्) एवमिव।

विदूषकः--(सानन्दम्) (ख) जइ एव्वं, मम वि वरवअस्सस्स मण्डणेण होदव्वं। ता पडिग्गहगहीदाएं[5] इमाए गत्तिआए अत्ताणं मण्डइस्सं। (गात्रिकां कण्ठे समर्पयति[6])

धनञ्जयः --- वेत्सितरामाभरणविनियोगस्थानानि।

---

(क) भो वयस्य! किमेतत्।

(ख) यद्येवं, ममापि वरवयस्यस्य मण्डनेन भवितव्यम्। तत् प्रतिग्रहगृहीतयानया गात्रिकयात्मानं मण्डयिष्यामि।

---

मम वि वरवअस्सस्सेत्यादिना शृङ्गारशोभायै प्रहसनप्रस्तावः॥

---

१. 'भद्र.' क पाठः. २. 'तैः' क पाठः. ३. 'च प्रणम्य पितरम्' क. पाठः.
४. 'यः—ए' क. पाठः. ५. 'ए ग' क ख. पाठः. ६ 'कारयति' क पाठः.

(नेपथ्ये)

अत्रभवत्याः सुभद्रायाः—

माणिक्योन्मिषितां बधान जघने त्वं मेनके! मेखलां
केशान् मिश्रय मिश्रकेशि! कुटिलान् मन्दारमालागुणैः ।
रम्भे! लम्भय पत्रभङ्गरचनामस्याः कपोलस्थली-
मुर्वीमुर्वशि! कल्पय स्तनतटीमामुक्तमुक्तावलीम् ॥१६॥

विदूषकः—(क) भो ववसिदं[1] वहूमण्डणं । तुवरदुतुवरदु अत्तभवं ।

धनञ्जयः—बाढम्[2] ।

(इति निष्क्रान्तौ)

## इति तृतीयोऽङ्कः ।

---

(क) भो व्यवसितं वधूमण्डनम् । त्वरतांत्वरतामत्रभवान् ।

---

व्यवसितम् अध्यवसितं, निर्व्यूढमित्यर्थः । एवमुभयोरभिलाषविप्रलम्भस्य चिन्तास्मृत्याद्यवस्थादशकेषु क्रमेण दत्तपदं परिपोषं[3] परिसमाप्य सम्भोगशृङ्गारवर्णनाय विवाहोपक्रम[4]प्रस्तावेन तृतीयाङ्कः समापितः ॥

इति विचारतिलकनाम्नि सुभद्राधनञ्जयव्याख्याने

तृतीयोऽङ्कः ।

---

१. 'द निअ व' क. ख पाठ' २ 'ढम् । प्रथमः कल्प.' ग. पाठ', ३ 'प स' क, पाठ, ४. 'ह्प्रक' क पाठ.

## अथ चतुर्थोऽङ्कः ।

(ततः प्रविशति षट्पदिका)

**षट्पदिका** — (क) अणुट्ठिअणिओअं अत्ताणं भट्टिदारिआए णिवेदइस्सं । (परिक्रम्यावलोक्य) एसा गोवद्धणिआ तुरिअतुरिअं आअच्छइ* । किण्णुखुं[3] एदं ।

(ततः प्रविशति गोवर्धनिका)

**गोवर्धनिका** — (विलोक्य) (ख) अम्मो छप्पदिआ । छप्पदिए! कुदो उण तुवं ।

**षट्पदिका** — (ग) हळा! अत्थि भट्टिदारिआए अणुट्ठिओ[6]

(क) अनुष्ठितनियोगमात्मानं भर्तृदारिकायै निवेदयिष्यामि । एषा गोवर्धनिका त्वरितत्वरितमागच्छति । किन्नुखल्वेतत् ।

(ख) अम्मो षट्पदिका । षट्पदिके! कुतः पुनस्त्वम् ।

(ग) सखि! अस्ति भर्तृदारिकयानुष्ठितः स्यन्दनव्रतकं नाम व्रतविशेषः । तस्य

अथ निर्व्यूढं विवाहं गमनोद्यमं च नायकस्याङ्कान्तरालप्रविष्टाभ्यां चेटीभ्यां सूचयति । प्रथमं षट्पदिकायाः प्रवेशः । अनुष्ठितनियोगमात्मानं भर्तृदारिकायै निवेदयिष्यामि । मया नियोगोऽनुष्ठित इति निवेदयिष्यामीत्यर्थः । नियोगप्रकारश्चेत्थाः संवादे स्पष्टीभविष्यतीत्यनुष्ठितनियोगमित्येवोक्तम् । एषा गोवर्धनिका त्वरितत्वरितमागच्छति इत एव । किन्नुखल्वेतत् । त्वरितत्वरितम् अतित्वरितम् । किन्नु खल्वेव त्वरयागमनस्य निमित्तमित्यर्थः ॥

अथ गोवर्धनिकाप्रवेशः । अम्मो षट्पदिका । अम्मो इति सम्भ्रमद्योतकमव्ययम् । षट्पदिके! कुतः पुनस्त्वम् । आगतेति शेषः । कुत इति किन्निमित्तं कस्मात् प्रदेशादिति च प्रश्नः ॥

१ 'णीपादाण' ख पाठः. २ 'क्रामति नेपथ्याभिमुखमव' क पाठः. ३. 'हु' ग पाठः ४ 'का—अ' क ग पाठः. ५ 'म' ख. पाठः ६ 'दव्वो' ख पाठः

* अत्र 'इदो एव्व' इति व्याख्यायामधिकः पाठः ।

सन्दणव्वदअं णाम वदविसेसो । तस्स पारणणिमित्तं सो-
ङ्गामिअं रहं आणेहि त्ति रण्णो उग्गसेणस्स सारहिं स-
न्दिसिअ आअदह्मि । सो वि तह रहं उवकप्पिअ उवग-
दो भट्टिदारिआए समीवं । तुवं उण कहिं पत्थिआ ।

**गोवर्धनिका**—(ख) आणत्तह्मि भट्टिणीपादेहि, जह 'तुमं ग-
दुअ बहिणिआए जसोदाए कहेहि जो तुह धीदाए सुभ-
द्दाए अस्सत्थदाणिमित्तं तुए उवआइदो गिरिजण्णो,
सो अज्ज एव्व तिस्से अणुऊळे णक्खत्ते सह गोवाळे-
हि आरंहीअदु' त्ति । तण्णिमित्तं तुरिअं गच्छीअदि ।
तहवि तुमं एत्तिअमत्तं पुच्छिदुं इच्छामि ।

---

पारणनिमित्तं साङ्ग्रामिकं रथमानयेति राज्ञ उग्रसेनस्य सारथिं सन्दिश्यागतास्मि । सोऽपि तथा रथमुपकल्प्योपगतो भर्तृदारिकायाः समीपम् । त्वं पुनः क्व प्रस्थिता ।

(ख) आज्ञप्तास्मि भट्टिनीपादैः, यथा 'त्वं गत्वा भगिन्यै यशोदायै कथय यस्तव धीताया सुभद्राया अस्वस्थतानिमित्तं त्वयोपयाचितो गिरियज्ञ, सोऽद्यैव तस्या अनुकूले नक्षत्रे सह गोपालैरारभ्यतामि'ति । तन्निमित्तं त्वरितं गम्यते । तथापि त्वामियन्मात्र प्रष्टुमिच्छामि ।

---

तस्योत्तर—हला ! अस्ति भर्तृदारिकयानुष्ठितः स्यन्दनव्रतकं नाम व्रतविशेषः । तस्य पारणनिमित्त साङ्ग्रामिकं रथमानयेति राज्ञ उग्रसेनस्य सारथिं सन्दिश्यागतास्मि । पारणं समापनम् । साङ्ग्रामिक सङ्ग्रामोचित, शस्त्रादिपरिकरपूर्णमित्यर्थ । स्यन्दनव्रतस्य परिसमापने स्यन्दनानयनस्यौचित्यमिति लोकप्रकाशनाय तथोक्तम् । सोऽपि तथा रथमुपकल्प्योपगतो भर्तृदारिकायाः समीपम् । इममर्थं प्रत्यनुष्ठितनियोगत्व कथितम् । इति स्ववृत्तान्तमुक्त्वा तदवस्थां पृच्छति—त्वं पुन क्व प्रस्थिता । कन्यापुरान्निर्गमनस्य दृष्टत्वात् क्व प्रस्थितेत्युक्तम् ॥

---

१ 'सग्गा' क ग पाठ   २ पु' क ग पाठ   ३ 'दिट्ठ' ख पाठ   ४ 'कू' ख पाठ,   ५ राही' ख ग पाठ   ६ 'अतुरिअ' ख ग पाठ

**षट्पदिका** — (क) कामं पुच्छीअदु।

**गोवर्धनिका** — (ख) एदं वि णाम किं कहेहि[1] सुदपुरुवं दिट्ठपुरुवं वा, जं पव्वजिदेहि[2] परिणअणं किज्जइ त्ति।

**षट्पादिका** — (ग) हळा! एत्थ कण्णाउरे चिरपरिइदा वि णिच्चप्पसुत्ता विअ तुमं[3]। ण दाव एव्वं एदं। सो जइवेसन्तरप्पडिच्छण्णो कुरुउळप्पदीवो कुमारधणञ्जओ। देवपादेहि पुण वळभद्दुद्धवप्पमुहं दासाळुहचक्कं वञ्चिअ अप्पआसं एव्व तस्स दिण्णा भट्टिदारिआ।

---

(क) काम पृच्छयताम्।

(ख) एतदपि नाम कि कथय श्रुतपूर्वं दृष्टपूर्वं वा, यत् प्रव्राजितैः परिणयनं क्रियत इति।

(ग) सखि! अत्र कन्यापुरे चिरपरिचितापि नित्यप्रसुप्तेव त्वम्। न तावदेवमेतत्। स यतिवेषान्तरप्रतिच्छन्नः कुरुकुलप्रदीपः कुमारधनञ्जयः। देवपादैः पुनर्बलभद्रोद्धवप्रमुखं दाशार्हचक्रं वञ्चयित्वाप्रकाशमेव तस्मै दत्ता भर्तृदारिका।

---

**आज्ञप्तास्मि** भट्टिनीपादैः, यथा 'त्वं गत्वा भगिन्यै यशोदायै कथय। तव धीताया* सुभद्राया अस्वस्थतानिमित्त त्वयोपयाचितो गिरियज्ञः। सोऽद्यैव तस्या अनुकूले नक्षत्रे गोपालैः सहारभ्यतामि'ति। तन्निमित्तं त्वरित गम्यते। तथापि त्वामियन्मात्रं प्रष्टुमिच्छामि। सौहार्देन भगिनीनिर्देशः। अस्वस्थतानिमित्तम् अस्वस्थताशमनायेत्यर्थः। उपयाचितः अस्मिन् सिद्धे इदं दास्यामीति देवतां प्रति दानपरिकल्पनमुपयाचनम्। गिरियज्ञो गिरिपूजनम्। गोपानां गिरिर्दैवतमिति तथोक्तम्। तस्या अनुकूले तदनुग्रहानुगुणे। तथापीति साध्यगौरवेण गन्तु त्वरितासि। इयन्मात्रमल्पमित्यर्थः॥

**कामं** पृच्छ्यताम्॥

**एतदपि** नाम किं कथय श्रुतपूर्वं दृष्टपूर्वं वा, यत् प्रव्राजितैः परिणयनं क्रियत इति। कथयेति सम्भ्रमेण मध्ये निर्देशः। नायकवृत्तान्तमविज्ञाय तथा प्रश्नः॥

---

१. 'हि वेण वि सु' क ख पाठ  २ 'इ' क ग पाठ  ३ 'व' क ग. पाठ
४. 'कु' ख ग पाठ

---

* 'धीता सुताया दुहिता च' इति वैजयन्ती.

**गोवर्धनिका** —— (सप्रमोदम्) (क) जइ एव्वं[1], ठाणे मं उवालंभसि। दिट्ठिआ जइच्छएव्व पदुमाअरं पविट्ठा कळहंसिआ।

**षट्पदिका** —— (ख) तुमं[2] पुण अत्तणो णिओअं अणुचिट्ठ। अहं पि भट्टिदारिआए सआसं गमिस्सं। (निष्क्रान्ता)

**गोवर्धनिका** —— (परिक्रम्यावलोक्य) (ग) एसो तादस्स णन्दगोवस्स परिजणो इसहओ इदो एव्व आअच्छइ।

(ततः प्रविशति गोपालकः)

**गोपालकः** —— (घ) भोभो गोळक्खआगोळक्खआ! आणवेइ तुह्मे शामी णन्दगोएं[3] 'इमे गोशमूहे हळिअतिणप्पवेअ-

(क) यद्येवं, स्थाने मामुपालभसे। दिष्ट्या यदृच्छयैव पद्माकरं प्रविष्टा कलहंसिका।
(ख) त्वं पुनरात्मनो नियोगमनुतिष्ठ। अहमपि भर्तृदारिकायाः सकाशं गमिष्यामि।
(ग) एष तातस्य नन्दगोपस्य परिजन ऋषभक इत एवागच्छति।
(घ) भोभो गोरक्षकागोरक्षकाः! आज्ञापयति युष्मान् स्वामी नन्दगोपः

अत्र कन्यापुरे चिरपरिचितापि नित्यप्रसुप्तेव त्वम्। वस्तुवृत्तस्याबोधात् प्रसुप्तत्वकथनम्। तद् बोधयति —— न तावदेवमेतत्। सः यतिवेषान्तरप्रतिच्छन्नः कुरुकुलप्रदीपः कुमारधनञ्जयः। देवपादैः पुनर्बलभद्रोद्धवप्रमुखं दाशार्हचक्रं वञ्चयित्वाप्रकाशमेव तस्मै दत्ता भर्तृदारिका॥

यद्येवं, स्थाने मामुपालभसे अधिक्षिपसि। स्थाने युक्तम्, अतिस्फुटस्याज्ञानादधिक्षेपो युक्तः। दिष्ट्या यदृच्छयैव पद्माकरं प्रविष्टा कलहंसिका। अत्राप्रस्तुतेनोचितसम्बन्धः प्रकाशितः॥

त्वं पुनरात्मनो नियोगमनुतिष्ठ। अहमपि भर्तृदारिकायाः सकाशं गमिष्यामीति षट्पदिकाया निष्क्रान्तिः॥

एष तातस्य नन्दगोपस्य परिजनः ऋषभक इत एवागच्छति॥

1. 'इ एव्व प' क. ग. पाठ. 2. 'प अ' क. ग. पाठ. 3 'वे' क ग. पाठ..

पेशलं[1] पदेशं शङ्कमिअ एत्थ किळ गिळिजण्णाणुभवण-'
त्थं ळेवदअप्पत्थं आअच्छह त्ति ।

**गोवर्धनिका** — (क) इसहअ ! कहिं संपदं जसोदज्जुआ चिट्ठइ ।

**गोपालकः** — (ख) कहं गोवद्धणिआ । गोवद्धणिए ! एशा शह शामिणा णन्दगोएण आळद्धगिळिजण्णा ळेवदअशाणुगए कञ्चणुज्जाणे वट्टइ ।

**गोवर्धनिका** — (ग) अम्मो आरद्धो पुव्वं एव्व एदेहिं पव्वदजण्णो । तह वि णिदेसमत्तं अणुचिट्ठामि । (निष्क्रान्ता)

---

'इमं गोसमूहं हरिततृणप्रवेकपेशलं प्रदेशं सङ्क्रमय्यात्र किल गिरियज्ञानुभवनार्थं रैवतकप्रस्थमागच्छते'ति ।

(क) ऋषभक ! कस्मिन् साम्प्रतं यशोदाज्जुका तिष्ठति ।

(ख) कथं गोवर्धनिका । गोवर्धनिके ! एषा सह स्वामिना नन्दगोपेनारब्धगिरियज्ञा रैवतकसानुगते काञ्चनोद्याने वर्तते ।

(ग) अम्मो आरब्धः पूर्वमेवैतैः पर्वतयज्ञः । तथापि निर्देशमात्रमनुतिष्ठामि ।

---

ततो गोपालकः । भोभो गोरक्षका गोरक्षकाः ! आज्ञापयति युष्मान् स्वामी नन्दगोपः 'इमं गोसमूहं हरिततृणप्रवेकपेशलं प्रदेशं सङ्क्रमय्यात्र गिरियज्ञानुभवनार्थं रैवतकप्रस्थमागच्छते'ति । तृणप्रवेकः तृणश्रेष्ठम् । तृणप्रकाण्डमितिवत् ॥

ऋषभक ! कस्मिन् साम्प्रतं यशोदाज्जुका तिष्ठति ॥

कथं गोवर्धनिका । गोवर्धनिके ! एषा सह स्वामिना नन्दगोपेनारब्धगिरियज्ञा रैवतकसानुगते काञ्चनोद्याने वर्तते ॥

अम्मो आरब्धः पूर्वमेवैतैः पर्वतयज्ञः । पूर्वमेव अस्मन्नियोगात् प्रागेवेत्यर्थः । तथापि निर्देशमात्रमनुतिष्ठामीत्यन्या गमनम् ॥

---

१ 'ळं पत्थं' ख. पाठः. २ 'दो ऐण्हिं पुव्वं एव्व ?' ख. पाठः. ३. 'व्वभोच्छरी' ख पाठः. ४. ख आ' ख पाठः.

• **गोपालकः**[1] — (विलोक्य) (क) एशे एशे महिशए भीदभीदं शव्वदो दिण्णदिट्ठी तुळिअतुळिअं आहावइ । किण्णुहु एदं ।

(ततः प्रविशति यथानिर्दिष्टो द्वितीयो गोपालकः)

**गोपालकः** — (सभयम्)[2] (ख) अळे अळे इशहअ! का एशा अशंभमदा, जं अवळाविअ चिट्ठसि । (धावति)

**प्रथमः** - - (बलान्निगृह्य) (ग) अळे! कुदो दे शंभमे ।

**द्वितीयः** — (घ) अळे! किं ण पेक्खशि, एशे एशे के वि ळोशघडिअभिउडिदुप्पेक्खळळाडे कोशादो अशिं कड्ढेइ । अवळे धणुम्मि मोव्विं[3] आळोवेइ । अण्णे शन्दणं आळुहइ । एक्के शळधीदो शळं उक्खिवइ । इदळे शण्णाहं आमुञ्चइ । किं वहुणा, एसा दुवाळवई मइळामअमत्ता विअ महिळा इदोतदो घोळइ[4] ।

---

(क) एष एष महिषको भीतभीत सर्वतो दत्तदृष्टिस्त्वरितत्वरितमाधावति । किन्नुखल्वेतत् ।

(ख) अरे अरे ऋषभक! कैषासम्भ्रमता, यदपलाय्य तिष्ठसि ।

(ग) अरे ! कुतस्ते सम्भ्रमः ।

(घ) अरे! किं न पश्यसि, एषएष कोऽपि रोपघटितभ्रुकुटिदुष्प्रेक्षललाटः कोशादसिं कर्षति । अपरो धनुषि मौर्वीमारोपयति । अन्यः स्यन्दनमारोहति । एकः शरधित

---

अथ गोपोक्तिः—एष एष महिषको भीतभीतं सर्वतो दत्तदृष्टिस्त्वरित त्वरितमाधावति । किन्नुखल्वेतत् । समरोद्यमसूचनार्थमनयोः प्रवेशः ॥

अथ महिषकः—अरे अरे ऋषभक! कैषासम्भ्रमता, यदपलाय्य तिष्ठसि पलायनमेव कर्त्तव्यमित्यर्थः ॥

अरे! कुतस्ते सम्भ्रमः ॥

अरे! किं न पश्यसि, एष एष कोऽपि रोपघटितभ्रुकुटिदुष्प्रेक्षललाटः

---

१. 'कः—ए' क. पाठः. २ 'यं सगद्गद च)' क. पाठ. ३ 'मीं' ग. पाटः. ४. 'ह्रो' स. पाठः.

(नेपथ्ये कलकलानन्तरम्)

भोभो मधुमथनभुजवनप्रच्छायोपसेवननिरस्तसमस्तपरिभवघर्मावलेपलेशाः ! कथंकथमीदृशमिदमादिन्यक्कारावतारमुपेक्षन्ते भवन्तः । अपिच —

गृह्णीध्वं प्रहरध्वमस्यत शरानारोहत स्यन्दना-
नादद्ध्वं विपृथुश्रवःप्रभृतयो वीर्याणि वृष्ण्यन्धकाः! ।
कोऽप्येष स्मरवैरिशौरिशिखिनो निस्तेजयन्नोजसा
भद्रां स्यन्दनवर्तिनीमपहरन्नस्मान् विधत्ते स्त्रियः ॥ १ ॥

---

शरमुत्क्षिपति । इतरः सन्नाहमामुञ्चति । किं बहुना, एषा द्वारवती मदिरामदमत्तेव महिलेतस्ततो घूर्णते ।

---

कोशादसिं कर्षति । अपरो धनुषि मौर्वीमारोपयति । अन्यः स्यन्दनमारोहति । एकः शरधितः शरमुत्क्षिपति । इतरः सन्नाहमामुञ्चति । सन्नाहः कवचम् । किं बहुना, एषा द्वारवती मदिरामदमत्तेव महिला इतस्ततो घूर्णते ॥

अथ चूलिकया सूचनम् -- भोभो इत्यादि । मधुमथनेति । भुजवनप्रच्छाय भुजवनस्य बहुच्छाया, तत्सेवनेन तदाश्रयणेनेत्यर्थः । परिभव एव घर्मावलेपः, तल्लेशोऽपीतः पूर्वं युष्माकं निरस्तः । इदमादिन्यक्कारावतारम् इदम्प्रथममित्यर्थः । अपिचेति उपेक्षा न युक्ता, प्रत्युतोद्यम एव युक्त इत्यर्थः । तच्छेषमाह — गृह्णीध्वमित्यादि । शस्त्राणीति शेषः । ग्रहणमात्रेण तु न फलं, प्रहरध्वम् । शरानस्यतेति दुर्गमत्वं खड्गादीनामविषयत्वं प्रकाशयति । विपृथुश्रवःप्रभृतयो वृष्ण्यन्धका इति सम्बोधनम् । वीर्याण्याददध्वं स्वीकुरुत । तत्र हेतुमाह — कोऽप्येष इति अनिर्देश्यरूपः । ओजसा स्वतेजसा । स्मरवैरिशौरिशिखिनो निस्तेजयन् निस्तेजसः कुर्वन् । ततोऽप्यधिकप्रभाव इत्यर्थः । भद्रां सुभद्राम् अस्मत्कन्यकाम् । स्यन्दनवर्तिनीमपहरन्निति स्पष्टमेवेत्यर्थः । अस्मान् स्त्रियो विधत्ते अस्माकं स्त्रीत्वमापादयति दौर्मनस्यपातरस्त्वादिप्रकाशनेनेत्यर्थः ॥ १ ॥

**प्रथमः** — (विलोक्य ससम्भ्रमम्)(क) अळे अळे! एशे एशे महापुळिशे कळकलिअकम्मुए पिट्ठप्पडिट्ठाविअतूणीळे आमुक्कशण्णाहे शामिणीए शुहद्दाए शअंगहिअअश्शळश्शी गच्छइ। अण्णं च एदश्श जाघोशश्शवणमत्तेण[2] एव्व पळम्मुहे आशी कुकुळबळशमूहे।

**द्वितीयः** — (विलोक्य सहासम्) (ख) अळे! कीश एशे शंळम्भे कळीअदि। एशे खु वाशुदेवे शहजं अवहळदि।

(नेपथ्ये)

भोभोः पुरन्दरावरजपुररक्षणदीक्षाधिकारदृढकक्षाः! कलितकतिपयास्त्रोपशीलनजनितदुःश्लाघाः! कदर्थितजगत्रयाः! कुकुरवृष्ण्यन्धकप्रमुखप्रवीराः! नखलु नखलु पलायन्तां वभन्तः। अपिच —

(क) अरे अरे एष एष महापुरुषः करकलितकार्मुकः पृष्ठप्रतिष्ठापितनतूणीर आमुक्तसन्नाहः स्वामिन्या सुभद्रया स्वयगृहीताश्वरश्मिर्गच्छति। अन्यच्चैतस्य ज्याघोपश्रवणमात्रेणैव पराङ्मुख आसीत् कुकुरबलसमूहः।

(ख) अरे! कस्मादेष संरम्भः क्रियते। एष खलु वासुदेवः सहजामपहरति।

अथ गोपालकः। एष एष महापुरुषः करकलितकार्मुकः पृष्ठप्रतिष्ठापिततूणीरः आमुक्तसन्नाहः स्वामिन्या सुभद्रया स्वयंगृहीताश्वरश्मिर्गच्छति। तया गृहीतसारथ्य इत्यर्थः। अन्यच्चैतस्य ज्याघोपश्रवणमात्रेणैव पराङ्मुख आसीत् कुकुरबलसमूहः॥

वासुदेवः सहजामपहरति॥

पुनश्चूलिका — भोभो इत्यादि। पुररक्षणदीक्षा पुररक्षणकृत्यं, तद्रूपे

१. 'डे। महिशए' ए' ग. पाठः. २. 'ण विअ प' क पाठ.

पार्थं तीर्थोपलब्धस्फुरितशिखिशिखाप्रोज्ज्वलच्छस्त्रजालं
ज्यानिष्पेषप्ररूढप्रचितघनकिणश्यामपीनप्रकोष्ठम् ।
प्रोन्मथ्यैनां हरन्तं सपदि सहभुवं सीरपाणेः सुभद्रां
शक्ताश्चेत् सत्वरं मां परनृपपृतनाघस्मरं वारयन्तु ॥ २ ॥

**प्रथमः** --- (क) अळे! ण एशे वाशुदेवे। वाशुदेवशदिशळूवे पत्थे। ण हु एदश्श शळमुहादो कश्श वि मोक्खो।

**द्वितीयः** --- (ख) अळे! के उणे[1] एशे अवळे ळहुच्छङ्गगए केदुळट्ठिं ओळम्बन्ते अदिविळूवे वाणळे विअ भीदभीदं

(क) अरे! नैष वासुदेवः । वासुदेवसदृशरूपः पार्थः । न खल्वेतस्य शरमुखात् कस्यापि मोक्षः ।

(ख) अरे! कः पुनरेषोऽपरः रथोत्सङ्गगतः केतुयष्टिमवलम्बमानोऽतिविरूपो

अधिकारे स्वकर्मणि बद्धकक्षाः, सन्नद्धा इत्यर्थः । कलितेति । कतिपयास्त्रोपशीलनेन, न तु समग्रेण । अत एव दुःश्लाघत्वम् । न केवलमात्मश्लाघा, कदर्थितजगत्रयाः । कुकुरेत्यादि सम्बोधनम् । न खलु पलायन्तामिति युष्मद्गौरवस्य नैतदुचितमिति भावः । किं पुनः क्रियतामित्यत्राह --- **पार्थमित्यादि** । शक्ताश्चेद् मां वारयन्तु । पार्थं कुन्तीपुत्रं मामिति गर्वेण परिकृत्य वचनम् । तीर्थोपलब्धानि सद्गुरुपरिगृहीतानि स्फुरितशिखिशिखाप्रोज्ज्वलच्छस्त्रजालानि यस्य । ज्यानिष्पेषप्ररूढैः ज्याघातजनितैः प्रचितैः पुनःपुनस्तत्रैवोपचितैः अत एव घनैः किणैः श्यामपीनप्रकोष्ठं, प्रकोष्ठयोरुभयोरतिपरिस्फुटज्याघातकिणमित्यर्थः । अथ विशेषनिश्चये हेतुः । प्रोन्मथ्य हरन्तं, न तु वञ्चयित्वा । सीरपाणेः सहभुवं, न तु यां काञ्चिद् दासीम् । हरन्तं, न तु हृतवन्तम् । मां शक्ताश्चेत् सत्वरं वारयन्तु । एवमपराधनिरूपणे पलायन न युक्तम् । परनृपपृतनाघस्मरमिति शत्रुराजन्यसैन्यसंहारकत्वं मम । तन्निरूपणे पलायनमेव युक्तम् । तत् शक्यमाचरन्त्विति चेदित्यस्यार्थः । इयं पार्थस्योक्तिः ॥ २ ॥

तेन गोपस्य भ्रमनिवृत्तिः । अरे! नैष वासुदेवः । वासुदेवसदृशरूपः पार्थः । न खल्वेतस्य शरमुखात् कस्यापि मोक्षः । खल्विति प्रसिद्धौ ॥

1. 'ण अवळे एदश्श व्व' क ग. पाठः.

इदोतदो पेळोअअन्ते चिट्ठइ । एशा वि किण्णामहेआ शामिणीए शमीवे चामळहत्था दीसइ ।

**प्रथमः** — (सावधान विलोक्य) (क) अळे! एदेण एदश्श वअश्शेण केणवि बह्मणेण होदव्वं । एशा उण मए दिट्ठपुळ्वा छप्पदिआ णाम तिश्शे शही ।

**द्वितीयः** — (ख) अळे! अच्छळिअं अच्छळिअं । एदश्शि णअळे एदश्श शळेहिं अणाळीढे ण हु अङ्गुळमत्ते वि पदेशे ।

**प्रथमः** — (ग) अळे! अज्जुणश्श ण एदं अच्छळिअं । (पुनर्विलोक्य)

---

वानर इव भीतभीतमितस्ततः प्रलोकयंस्तिष्ठति । एषापि किन्नामधेया स्वामिन्याः समीपे चामरहस्ता दृश्यते ।

(क) अरे! एतेनैतस्य वयस्येन केनापि ब्राह्मणेन भवितव्यम् । एषा पुनर्मया दृष्टपूर्वा षट्पदिका नाम तस्याः सखी ।

(ख) अरे! आश्चर्यमाश्चर्यम् । एतस्मिन् नगर एतस्य शरैरनालीढो न खल्वङ्गुलमात्रोऽपि प्रदेश ।

(ग) अरे! अर्जुनस्य नैतदाश्चर्यम् । अरे! एषोऽतिक्रान्तो गोपुरद्वारम् । एते वि-

---

अरे! कः पुनरेषोऽपर' रथोत्सङ्गगत. केतुयष्टिमवलम्बमानोऽतिविरूपो वानर इव भीतभीतमितस्ततः प्रलोकयंस्तिष्ठति । एषापि किन्नामधेया स्वामिन्याः समीपे चामरहस्ता दृश्यते ॥

अरे! एतेनैतस्य वयस्येन केनापि ब्राह्मणेन भवितव्यम् । एषा पुनर्मया दृष्टपूर्वा षट्पदिका नाम तस्याः सखी ॥

अरे! आश्चर्यमाश्चर्यम् । एतस्मिन् नगर एतस्य शरैरनालीढो नाङ्गुलमात्रोऽपि प्रदेशः ॥

अरे! अर्जुनस्य नैतदाश्चर्यम् । अरे! एषोऽतिक्रान्तो गोपुरद्वारम् । एते

---

१. 'वुळे' स. पाठ .

अळे! एशे अदिक्कन्दे गोवुळदुआळं । एदे विपुहुप्पमुहा[1] दासाळुहवीळा शशंळम्भं अणुहावन्ति । ता महन्तेण शमळेण होदव्वं । अविअ अहके पुव्वं पि पत्थपळक्कमदंसणे पवड्ढिअकुदूहळे । ता एहि एदश्श ळेवदअश्शे[2] शूळळोअळिहिदं[3] शिहळदळं आळुहिअ *वुळोअइश्शामो ।

(उभौ परिक्रम्य शिखरारोहणं नाटयत:)

**प्रथमः**--- (क) अळे! अहके दाव एदं शिहळदळं आळूढे । तुवं पुण वल्लीओ ओळम्बन्ते पए पए पडिक्खळशि । अदिविह्मए एशे, जं इशहआदो महिशए दुव्वळे शंवुत्ते ।

---

पृथुप्रमुखा दाशार्हवीराः ससरम्भमनुधावन्ति । तन्महता समरेण भवितव्यम् । अपिचाह पूर्वमपि पार्थपराक्रमदर्शने प्रवर्धितकुतूहलः । तदेह्येतस्य रैवतकस्य सूर्यलोकलिखित शिखरतलमारुह्य विलोकयिष्यावः ।

(क) अरे! अहं तावदेतच्छिखरतलमारूढः । त्व पुनर्वल्लीरवलम्बमानः पदेपदे प्रतिस्खलसि । अतिविस्मय एषः, यद् ऋषभकाद् महिषको दुर्बलः संवृत्तः ।

---

विपृथुप्रमुखा दाशार्हवीरा· ससरम्भमनुधावन्ति । तन्महता समरेण भवितव्यम् । अपिचाहं पूर्वमपि पार्थपराक्रमदर्शने प्रवर्धितकुतूहलः । तदेह्येतस्य रैवतकस्य सूर्यलोकलिखितं शिखरतलमारुह्य प्रलोकयिष्यावः ॥

अरे! अह तावदेतच्छिखरतलमारूढ. । त्व पुनर्वल्लीरवलम्बमानः पदेपदे प्रतिस्खलसि । अतिविस्मय एष., यद् ऋषभकाद् महिषको दुर्बलः संवृत्तः । महिषस्य बलीयस्त्वं युक्तमिति श्लेषेण निर्देशः ॥

---

१. 'पञ्चिय' क.पाठ   २. 'स्स एद श्रं' ग पाठ   ३ 'द' ग पाठ

* 'पळो' इति व्याख्यानुसारी पाठ

द्वितीयः—( कथमप्यारुह्यावलोक्य ) ( क ) अले! पेक्खपेक्ख, अणुश[1]ळन्तं शत्तुबळं पेक्खिअ धणञ्जएण पडिणिवत्तिए ळहे। अण्णं च अच्छळिअं पेक्ख। एदश्श शळहेहिं विअ शळशमूहेहिं विदळिअधअकुहकङ्कडशिळत्तच्छत्तप्पमुहेहिं पडन्तेहिं णळळहतुळआसिन्धुळाणं ण एक्के वि विदळिए। तहवि पळम्मुहा जादवजोहा। एशो[2] विपुहू शअं उवशप्पिअ शेव्वशुग्गीवमेहपुळ्ळवळाहअतुळङ्गमवळेहिं घडिअं देवश्श शन्दणं[3]ळदणं विश्शाणिअ किदपडिळम्भणे शन्धि कळिअ पडिणिवुत्ते।

---

(क) अरे! पश्यपश्य, अनुसरत् शत्रुबलं प्रेक्ष्य धनञ्जयेन प्रतिनिवर्तितो रथः। अन्यच्च आश्चर्यं पश्य। एतस्य शलभैरिव शरसमूहैर्विदलितध्वजकुथकङ्कटशिरस्त्रच्छत्रप्रमुखैः पतद्भिर्नररथतुरगसिन्धुराणां नैकोऽपि विदलितः। तथापि पराङ्मुखा यादवयोधाः। एष विपृथुः स्वयमुपसृप्य शैव्यसुग्रीवमेघपुष्पवलाहकतुरङ्गमवरैर्घटितं देवस्य स्यन्दनरत्नं विश्राण्य कृतपरिरम्भणः सन्धिं कृत्वा प्रतिनिवृत्तः।

---

अरे! पश्यपश्य, अनुसरच्छत्रुबलं प्रेक्ष्य धनञ्जयेन प्रतिनिवर्तितो रथः। अन्यच्चाश्चर्यं पश्य। एतस्य शलभैरिव शरसमूहैर्विदलितध्वजकुथकङ्कटशिरस्त्रच्छत्रप्रमुखैः। कुथो वर्णकम्बलः। कङ्कटः उरश्छदः। शिरस्त्रं शिरस्त्राणम्। एतेषां विदलनं दृश्यत इत्यर्थः। नररथतुरगसिन्धुराणां नैकोऽपि विदलितः नच्छिन्नः। ध्वजादीनामेवच्छेदनं, न योद्धृप्रमुखानामित्यर्थः। अनेन युद्धे परेषां निवर्तनमेवापेक्षितमिति प्रकाश्यते। तथापि पराङ्मुखा यादवयोधाः। एष विपृथुः स्वयमुपसृप्य शैव्यसुग्रीवमेघपुष्पवलाहकैस्तुरङ्गमवरैर्घटितं देवस्य स्यन्दनरत्नं विश्राण्य कृतपरिरम्भणः सन्धिं कृत्वा प्रतिनिवृत्तः। विश्राणनं दानम्॥

---

१. 'हे। (पुनर्विलोक्य सविस्मयम्) अ' क. पाठः. २. 'शे अ वि' ग. पाठः. ३. 'ण वि' क. पाठः.

**प्रथमः** — (क) अळे! अदिकादळे एशे, जं शत्तुणो भीदीए श-' ळणं उवगदे ।

(नेपथ्ये)

अलममुना परिमितावकाशव्यापिना कनककठिनकोणाभिघातसमुद्भूतेन दुन्दुभिध्वानेन । तथाह्यमुष्य फल्गुनस्य —

विनष्टमददिग्गजश्रवणरन्ध्रविस्फोटनी
जगत्त्रयभयं मुहुर्विदधती धनुष्टङ्कृतिः ।
*प्रबोधयति सात्त्वतान् प्रथमसूकरोग्रानन-
प्रवान्तगुरुबृंहितप्रतिरवप्रतिस्पर्धिनी ॥ ३ ॥

**द्वितीयः** — (ख) अळे अळे! के एशे पळवदि ।

(क) अरे! अतिकातर एषः, यत् शत्रोर्भीत्या शरणमुपगतः ।
(ख) अरेऽरे! क एष प्रलपति ।

अरे! अतिकातर एषः, यत् शत्रोर्भीत्या शरणमुपगतः ॥

अथ चूलिका—अलममुनेत्यादि । परिमितावकाशव्यापिना सङ्कुचितस्थलप्रसृतेन अलं, विपक्षज्यारवस्य प्रचुरत्वादित्यर्थः । कनककठिनेन कोणेन वादनदण्डेन योऽभिघातः, तदुत्थेन दुन्दुभिस्वनेन, अतिप्रयत्नजनितेनेत्यर्थः । तद्वैफल्यमुपपादयति—तथाहीत्यादिना । अमुष्य फल्गुनस्य धनुष्टङ्कृतिः सात्त्वतान् विबोधयति, दुन्दुभिध्वनिना किं फलमित्यर्थः । विनष्टमदानाम् एतच्छ्रवणेन निरस्तमदानां दिग्गजानां श्रवणरन्ध्रविस्फोटनी मांसलत्वेन श्रवणरन्ध्रं भिन्दाना । अनेन व्याप्त्यतिशयः प्रकाश्यते । मुहुर्जगत्त्रयभयं विदधती । उपमानेन टङ्कृतेर्गौरवं समर्थयति—प्रथमसूकरस्य आदिवराहस्योग्राननात् प्रवान्तं यद् गुरुबृंहितं, तत्प्रतिध्वनिना स्पर्धितुमुद्यता । तत्समेत्यर्थः । सात्त्वतानां बोधनमनयैवालं, किं दुन्दुभिताडनेनेत्यर्थः ॥ ३ ॥

* 'विबो' इति व्याख्यानुसारी पाठः.

**प्रथमः**—(विलोक्य) (क) अळे! एशे शभापाळे भेळिं ताळेदुकामे घोशेदि । किं इमिणा । इमं वुत्तन्तं णन्दगोवेश्श णिवेदइश्शामो ।

(निष्क्रान्तौ)

प्रवेशकः ।

---

(ततः प्रविशति सभापाळः)

**सभापालः**—(अलममुनेत्यादि पठित्वा) अथवाविकल्पितमनुष्ठेयानि राजशासनानि । ताडयामि तावद् भेरीम् । (तथा करोति)

(ततः प्रविशति सुभद्रया वाह्यमानरथो धनञ्जयो विदूषकश्चेटी च)[2]

**धनञ्जयः**—(सुभद्रामवलोक्य) अयि प्रेयसि!

विपृथुरयमपेतः प्रस्थिता वृष्णियोधाः

प्रणयिनि! परिखेदं मा कृथाश्चोदयाश्वान् ।

---

(क) अरे! एष सभापालो भेरीं ताडयितुकामो घोषयति । किमनेन । एतं वृत्तान्तं नन्दगोपस्य निवेदयिष्यावः ।

---

अरे अरे! क एष प्रलपति ॥

अरे! एष सभापालः भेरीं ताडयितुकामो घोषयति । किमनेन । एतं वृत्तान्तं स्वामिनो नन्दगोपस्य निवेदयिष्यावः । इति तयोर्निष्क्रान्तिः ॥

एवं प्रवेशकेनान्तरालिकवृत्तान्ते सूचिते सभापालप्रवेशः । तस्यैव पूर्वमुक्तिः । अत एवाह—अथवेति । अविकल्पितमनुष्ठेयानि राजशासनानि राजशासने कर्तव्याकर्तव्यनिरूपणं न भृत्यस्य । उक्तमनुष्ठेयमेवेत्यर्थः । इति भेरीताडनम् ॥

अथ नायकस्य प्रवेशः । अथ प्रवेशकसूचितप्रकारेण प्रणयिनीवाह्यमान

---

१. 'वाळअश्श' ख. पाठः. २. '(श्च षट्पदिकया सह)' क. पाठः.

अनतिजवमिदं ते नः क्षिणोति श्रमार्तं ,
श्रमजलकणमुक्तामुक्तमूलं कपोलम् ॥ ४ ॥

---

रथस्य गच्छतो नायकस्य प्रासङ्गिकप्रतापविक्रमसत्त्वोत्कर्षप्रकाशितोत्साहरूपं वीररसस्थायिभावमङ्गतां नयन्नङ्गिरूपस्य सम्भोगशृङ्गारस्य प्रियतमां प्रति चाटुभाषणरूपोऽवस्थाविशेषः प्रकाश्यते — अर्थीत्यादि । प्रयत्नलब्धायाः प्रेमसर्वस्वनिधानभूताया निकटवर्तिन्याः प्रियायाः सारथ्यशिक्षापाटवं क्षोभहेतावपि निर्विकाराभ्यां मधुरतरसानुरागमसृणप्रसराभ्यां नयनाभ्यां तद्वदनकोकनदकान्तिपीयूषं पायं पायं श्लाघमानोऽनुभावमुखेन तत्परिश्रममुन्नीय रथस्य मन्दप्रेरणं प्रार्थयते — प्रेयसीति । अस्मिन् जीवलोके त्वत्तः प्रियतरं वस्तु मम न किञ्चिदपि विद्यते । अत उन्नीतेन त्वत्परिश्रमेण प्रतिबिम्बितमात्मपरिश्रममसहमानः प्रार्थयामि । **प्रणयिनि!** परिखेदं मा कृथाः । अश्वानां जवप्रेरणेनेति शेषः । अत एवाश्वानतिजवं चोदयेति विधिः । परिश्रमस्यासह्यतया निषेधपूर्वं मन्दप्रेरणविधानम् । प्रणयिनीति निरन्तरानुबद्धनिरतिशयप्रणयभारविवशा त्वम् । परिखेदं परिश्रमनिमित्तं सम्भ्रमम् । परिखेदशब्देन "श्रमः खेदोऽध्वरत्यादेः" इत्युक्तत्वात् श्रमापरपर्यायेण तत्कारणभूतः सम्भ्रमोऽत्र लक्ष्यते । परिखेदस्य नैयत्यं फलम् । अत्र शब्दशक्त्या तव सुकुमारतनुलतालस्यकरेण सम्भ्रमेण प्रणयिनि मयि परिश्रम प्रणयित्वादेवापरिहार्यं मा कृथा इत्यर्थो व्यज्यते । तस्य नः क्षिणोतीति साक्षादुक्त्या गुणीभाव इति नातिहृद्यत्वम् । निषेधे हेतुमाह — विपृथुरित्यादि । अयमपेतः सन्धित्सया (समागतः?) वासुदेवाभिप्रायेण समागतः अस्मथात्रानुकूलतां सम्पाद्यापगतः । अतः सम्भ्रमो न कार्यः । वृष्णियोधाः बलभद्रमतानुसारिणः पूर्वं सम्मुखीनाः निवृत्य यातुमुपक्रान्ताः । स्वजनस्य विरोधे प्रागेव गन्तव्यमिति तव जवेन प्रेरणम् । तेषां निवृत्तत्वात् सम्भ्रमो न कार्य इति भावः । आत्मगमनानुरूप प्रेरणं सम्भ्रमो वा कथं निषिध्यत इत्यत्राह — अश्वाननतिजवं चोदयेति । गमनानुगुणं प्रेरण सदनुगुणो वेगश्च न निषिध्यते । परिश्रमकरत्वादतिवेग एव निषिध्यते । शिक्षाबलेन जवप्रेरणे मम परिश्रमो नास्ति । तत् किमिति जवप्रेरणं निषिध्यत इति चेन् तत्र हेतुमाह — इदं ते कपोलं श्रमार्तं नः क्षिणोति अस्मान् परिखेदयति । इदमिति सम्मुखीनतया निजकान्तिसन्तानेन नयनानन्दप्रदम् । श्रमार्तम् अश्वानां त्वरितप्रेरणकृतेन श्रमेणार्तं पीडितम् । अत्र मनस आर्तत्वं कपोले आरो-

सुभद्रा --- (आत्मगतम्) (क) अय्यउत्तमुहळग्गळोअणवावाराए मम हिअअं अण्णहिं ण देअइ अवहाणं । केवळं भाउणो वासुभद्दस्स सिक्खाविसेसो पग्गहेसु पवत्तेदि हत्थे । (प्रत्यक्षम्) जं अय्यउत्तो आणवेदि । (मन्दं वाहयति रथम्)

(क) आर्यपुत्रमुखलग्नलोचनव्यापाराया मम हृदयमन्यत्र न ददात्यवधानम् । केवलं भ्रातुर्वासुभद्रस्य शिक्षाविशेषः प्रग्रहेषु प्रवर्तयति हस्तौ । यदार्यपुत्र आज्ञापयति ।

प्यते, अनुभावस्य तत्र स्फुटत्वात् । तदाह --- श्रमजलकणमुक्तामुक्तमूलमिति । श्रमजलकणैरेव मुक्ताभिः स्वच्छतया सूक्ष्मबिन्दुरूपतया च मुक्तारूपैः आमुक्तमूलम् अनुबद्धमूलम् । मुक्तात्वारोपशेषतयामुक्तत्वकथनम् । रत्नानां कनकादिषु प्रत्युप्तत्वमामुक्तशब्देनोच्यते । अत्र मणिदर्पणप्रान्तादिषु माणिक्यमुक्ताद्यामोचनं यथा शोभां जनयति, तथैव कपोलस्यापि श्रमजलकणोदयेन शोभैव । अयमेव लोकोत्तरवस्तुस्वभावः, यन्निजसम्बद्धस्य सर्वस्यैव शोभाकरत्वसम्पादनमिति मुक्त मुक्तमूलमित्युक्तम् । तर्हि कथं पीडाकरत्वमित्यत्र हेतुः -- श्रमजलेति । जलकणर श्रमहेतुत्वं नियतम् । अत एव श्रमजलमित्युच्यते । श्रमस्य च हेतुः सिद्धः अतो नः अस्मान् स्नेहपारतन्त्र्येणाल्पमपि क्लेशोदयमसहमानान् । परिस्फुटस्‌ शोभाकरत्वस्याङ्गीकारेऽप्येतैरस्या अतिसुकुमारतनुलतायाः सम्भ्रमोत्थापितः परि श्रमोऽनुमीयत इति बलाच्चित्तं पीडयति । अतस्तव शिक्षागौरवेऽपि कार्यानुमेयस्‌ श्रमस्य लेशतोऽप्युदयोऽस्मान् पीडयति । तद् मन्दं प्रेरयेति प्रियतमस्य निजानु रागपरिपोषानुगुणश्चाटुभाषणात्मा सम्भोगशृङ्गारामृतकणोऽत्र व्यज्यते ॥ ४ ॥

अथ नायिका कान्तस्योत्साहानुरूपं वर्तमानाप्यनुरागपारतन्त्र्येण चित्तस्‌ तदेकपरत्वं स्वयमेव निरूपयन्ती प्रियतमवचनमनुवदति --- आर्यपुत्रमुखलग्नलो चनव्यापाराया मम हृदयमन्यत्र न ददात्यवधानम् । केवल भ्रातुर्वासुभद्रस्‌ शिक्षाविशेषः प्रग्रहेषु प्रवर्तयति हस्तौ । मम हृदय बहुप्रकारमनुरागवीथीचङ्क

१. 'ति) वि' क. पाठ' २. 'आदीना' ख. पाठ'.

**विदूषकः**---(जनान्तिकम्) (क) भो वअस्स! ण दाव एक्को वि दे कामरसाणुभवो अकळहोपदंसओ। पुडमं दाव पञ्चाळी देवासुरसमं सङ्गामं पवत्तिअ पाविदा। इमाए पुण वासुदेवेण दिण्णाए कुदो[1] कळहप्पसङ्गो त्ति मए चिन्तिदं। एत्थ उण तदो वि विउणो खोहो संवुत्तो। सव्वहा ण मे अवमुच्चुमुहादो मोक्खो।

(क) भो वयस्य! न तावदेकोऽपि ते कामरसानुभवोऽकलहोपदंशकः। प्रथमं तावत् पाञ्चाली देवासुरसमं सङ्ग्रामं प्रवर्त्य प्रापिता। अनया पुनर्वासुदेवेन दत्तया कुतः कलहप्रसङ्ग इति मया चिन्तितम्। अत्र पुनस्ततोऽपि द्विगुणः क्षोभः संवृत्तः। सर्वथा न मे अपमृत्युमुखान्मोक्षः।

मणभिन्न दैववशादेकत्रैव विश्रान्तमन्यवस्तुनि दर्शनश्रवणादिविषयेऽवधानं तात्पर्यं न करोति। अतः आर्यपुत्रमुखलग्नलोचनव्यापारायाः, नयनयोर्हृदयानुसारित्वात् तस्य सर्वाङ्गेष्वपि मुखे सावधानत्वान्नयनव्यापारस्य तल्लग्नत्वम्। आर्यपुत्रेति प्रेमबहुमानयोग्यत्व, मुखशब्देन विषयान्तरानपेक्षत्वं, लग्नशब्देनान्यतो नयनाशक्यत्वं, व्यापारशब्देन मुखावयवानां नयनकपोलाधरादीनां चातुर्येण तत्र मसृणपातं पुनः पुनः प्रसरणमनलंभावश्च प्रकाश्यते। हृदयस्यान्यत्र चलने तदनुसरणं घटते। तदभावे तत्राविच्छिन्नानुभवं प्रसरणं युक्तमेवेति च व्यापारशब्देन प्रकाश्यते। हृदयावधानाभावे कथं सारथ्यकर्मेत्यत्राह—शिक्षाविशेषः केवल प्रग्रहेषु हस्तौ प्रवर्तयति पूर्वमभ्यसने शिक्षागौरवमेव मनोनुसरणं विनाप्यश्वरश्मिसङ्ग्रहणे मोचनग्रहणादिकं निर्वर्तयति। केवलशब्देन मनसः कदाचिदप्यननुवृत्तिः प्रकाश्यते। शिक्षणेऽप्युपदेष्टुरनाप्तत्वे पाटवं न भवेदत्राह---वासुभद्रस्येति। तस्यापि तादृश्यं चेन्न दार्ढ्यं भवेदित्यत्राह—भ्रातुरिति। स्नेहसर्वस्वपात्रभूतस्य लोकोत्तरस्योपदेशग्रहणे किमन्यत् सहकारित्वेनापेक्षितमिति भावः। एवं सम्भोगवीथीं समीक्ष्य तदुक्त्यनुसारेण रथं मन्दं प्रेरयति॥

कामरसानुभव इति कामरसस्य रसपर्यायेणामृतत्वारोपशेषतया कलहस्योपदंशत्वारोपः॥

---

१. 'दो उण क' क. पाठः. २. 'ध्रं' क. पाठः.

**सुभद्रा** — (क) हळा! अदिदिढबद्धा गत्तिआ पीडेइ मे पयोहरजुअळं । ता सिडिळेहि दाव णं ।

**षट्पदिका** — (सस्मितम्) (ख) भट्टिदारिए! तदाणिं परिणअणमङ्गळमण्डणपत्थावे सुसण्णिहिदेसु दिव्वभूसणेसु कुमारणामहेअङ्किदत्ति अय्यकोण्डिण्णस्स हत्थादो घेत्तूण जा[1] पुढमं आमुक्का, ताए एव्व[2] इदाणिं इमाए कुदो[3] दे मच्छरो ।

**सुभद्रा** — (सासूयम्) (ग) चिट्ठदु एसा मुहरा । अय्य! तुमं एदं अवणेहि ।

---

(क) सखि ! अतिदृढबद्धा गात्रिका पीडयति मे पयोधरयुगलम् । तच्छिथिलय तावदेनाम् ।

(ख) भर्तृदारिके ! तदानीं परिणयनमङ्गलमण्डनप्रस्तावे सुसन्निहितेषु दिव्यभूषणेषु कुमारनामधेयाङ्कितेत्यार्यकौण्डिन्यस्य हस्ताद् गृहीत्वा या प्रथममामुक्ता, तस्यामेवेदानीमस्यां कुतस्ते मत्सरः ।

(ग) तिष्ठत्वेषा मुखरा । आर्य ! त्वमेतामपनय ।

---

तदानीं परिणयनमङ्गलमण्डनप्रस्तावे परिणयने मङ्गलानां शोभाजनकानां मण्डनानां हारवलयनूपुरादीनां परिग्रहे । दिव्यभूषणेषु अमानुषेषु । अत एव परिग्रहयोग्येषु दिव्यस्त्रीभिरानीतेषु प्रथमं (?) कुमारस्य नामधेयैरङ्कितेत्यतिलोभनीयत्वेन कौण्डिन्यस्य हस्तात् परिगृह्य या प्रथमं क्रमसुलङ्घ्यापि धृता । तादृश आदरोऽस्यां पूर्वं जातः । इदानीं तस्या एव शिथिलीकरणं प्रार्थ्यते । पूर्वं नामाङ्कितत्वेनास्यामादरः नामदशकाभिधेयस्य कान्तस्य स्तनाश्लेषे सिद्धे किमनयेत्यनास्थात्र व्यज्यते । इत्येवमवस्थोचिता चेष्टाश्चाट्टक्तिः । अत एव मत्सर इत्युक्तम् । परोत्कर्षाक्षमा मत्सरः । इयमस्मत्स्तनशिखरसंश्लेषेण गर्वं मा भजत्विति । अत्र गात्रिकायाः शिथिलीकरणप्रस्तावोऽन्तरा पतनेन पुनरासादनसङ्घटनार्थम् ॥

---

१. 'जाए तुए पु', क पाठ' २ 'व्व इमाअ एहिं कु' क पाठ. ३ 'दो म' ख पाठ'.
४. 'रादान' ख पाठ'.

**विदूषकः** — (क) तह । (गात्रिकामपनयति)

(नेपथ्ये)

अयमयमक्रूरानिरुद्धचारुदेष्णनिशठविडूरथसाम्ब-
सारणसात्यकिप्रसेनप्रद्युम्नप्रमुखप्रवीरनायकपुरस्सरः पर-
स्परसङ्घट्टनप्रपिष्टपट्टमकुटकटककवचकेयूरधूलीमेदुरी—
कृतमेदिनीपरागपटलपाण्डरदिक्चक्रवालः ससंरम्भमह-
महमिकया सत्वरमाधावति सात्त्वतसमूहः ।

**सभापालः** — (ससम्भ्रम[2] नेपथ्याभिमुखमवलोक्य) अये, किमसौ समर-
संरम्भपिनद्धवर्मणा कृतवर्मणानुगम्यमानः कृतान्तः ।
नहि नहि

अङ्घ्रिक्षेपैरजस्रं धरणिधरभृतां कम्पयन् भूतधात्रीं
निर्यन्नेत्रानलार्चिःकपिशितभुवनः कामपालः क्षणेन ।

---

(क) तथा ।

---

अयमयमित्यादिना चूलिकया अङ्गिरसाविरोधेन रौद्रं प्रस्तोतुं तदालम्बनस्य बलभद्रस्य प्रवेशसूचनम् । अक्रूरेत्यादिना सेनानायकानां नामग्रहणम् । परस्परसङ्घट्टनेन सम्मर्दनेन निर्गमसम्भ्रमकृतेन प्रपिष्टानां चूर्णितानां पट्टानां ललाटोपरि पिनद्धानां कनकपट्टानां मकुटकटककेयूरादीनां च धूलीभिर्मेदुरीकृतः प्रचुरीकृतो यो मेदिनीपरागः, अर्थादश्वखुरादिभिरुत्थापित', तेन बाहुल्येन पाण्डरीकृतो दिक्चक्रवालो येन ॥

एव शब्दानुसारेण सभापालः बलभद्रागमनप्रकारमाह — किमसावित्यादि । पिनद्धवर्मणेति शिरस्त्राणशस्त्रादीनां ग्रहणोपलक्षणम् । कृतान्त इति पुनर्निमित्तान्तरभेदकथनम् । असौ कामपाल इति बोध्यम् । आधावनप्रकारमाह — अङ्घ्रिक्षेपैरित्यादिना । सावष्टम्भश्चरणविन्यासः । धराणिधरभृतां स्थिरीकृतामित्यर्थः ।

---

१. 'प्रद्युम्नपरशुरामगवेनप्रमुखप्रवीरनायक' क पाठ.    २. 'ससम्भ' ग पाठ

आधावत्येष भीमभ्रुकुटिविषमितास्विन्नवक्त्रः समस्तं
क्रुद्धः संहर्तुकामः स्वयमिव भगवान् धूर्जटिर्धूतसीरः ॥

**धनञ्जयः** — (आकर्ण्य सक्रोधम्) कथंकथं कामपालो मामनुबध्नाति । अयि प्रेयसि! सन्ततपीतहालाक्षीबभावविक्लवं हलिनं ते भ्रातरं प्रति निवर्तय रथम् । अपि च —

अन्तर्भवद्रिपुसुयोधनसख्यबन्ध-
प्रेङ्खोलिता प्रणयिना मधुसूदनेन ।
मच्छस्त्रकृत्तवलभद्रगलाभिधान-
ग्रन्थिच्छिदाच्छिदुरदुःस्थितिरस्तु मैत्री ॥ ६ ॥

(धनुर्विष्फारयति)

अपिशब्दोऽर्थात् सिद्धः, धरणिधरभृतामपि कम्पयन्निति । निर्यतः कोपेन निर्गच्छतो नेत्रानलस्य ज्वालाभिः कपिशितभुवनः । अनेनार्चिषां बाहुल्यं प्रकाश्यते । भीमभ्रुकुटिविषमितस्विन्नवक्त्र इति च रौद्रस्थायिनः क्रोधस्यानुभावः । धूतसीरः प्रकम्पितनिजायुधः । क्रुद्धः सहजापहारं प्रतीति शेषः । समस्त संहर्तुकामो भगवान् स्वयं धूर्जटिरिवेत्युत्प्रेक्ष्यते ॥ ५ ॥

एवं सभापालवचनमाकर्ण्य कुपितो नायकः रथस्य प्रतिनिवर्तनं प्रति प्रेयसीं प्रेरयति । कथंकथं कामपालः नित्यमस्मद्विपक्षपक्षपाती मामनुसरति । अयि प्रेयसीति कथमयमस्मदप्रियप्रवृत्त इति बुद्धिं मा कृथाः । मत्प्रेयसीत्वस्य केनापि न विपर्यय इत्यवधार्यते । भ्रातरं प्रति रथं निवर्तय, अन्यथा वीरधर्मस्य विरोधो भवेत् । तत् तवापि न रुचितम् । तथापि भ्रातरं प्रति रथनिवर्तनमनुचितमिति शङ्कां परिहरति — सन्ततेत्यादि । सन्ततपीतया अविच्छिन्नपीतया कालाद्यनवेक्षणेन युक्तिं विना पीतया । क्षीबभावं मत्तहृदयम् । अत एव युक्तायुक्तविवेकरहितम् । ते भ्रातरमिति भ्रातृत्वेन तव यथा स्नेहः, तथा भगिनीत्वेन त्वयि तस्य न स्नेहः । अत एव प्रातिकूल्यम् । तत्र क्षीबभावत्वमेव हेतुः । तद् निवर्तनं

१. 'त' क. पाठ. २. 'हर्तार' ख. पाठ.

सुभद्रा—(सबाष्पगद्गदम्) (क) अय्यउत्त! सेसवादो आरहिअ तुह चळणकमळगअं मे अणुराअं अवेक्खिअ जह अहं कुळविणासकारिणित्ति ण ळोअपरिवादाणं भाअणं होमि, तह विहेहि। (पादयोः पतति)

धनञ्जयः—(ससम्भ्रममुत्थाप्य) प्रिये! मा स्म विषीदः। अमी हि त्वन्नेत्रकुवलयविगलिता गलदायुषो गदाधराग्रजस्य शरणमासन्नाश्रुबिन्दवः। यदि पुनरस्मद्रथमनुबध्नीयुर्वृष्णय-

(क) आर्यपुत्र! शैशवादारभ्य तव चरणकमलगतं मे अनुरागमवेक्ष्य यथाहं कुलविनाशकारिणीति न लोकपरिवादानां भाजनं भवामि, तथा विधेहि।

नानुचितमिति भावः। अपि चेति रथनिवर्तनमेव न, मत्प्रवृत्तिमपि त्वां बोधयामि। प्रणयिना मधुसूदनेन अकृत्रिमस्नेहयुक्तेन वीराग्रेसरेण वासुदेवेन। मैत्री सौहार्दम्। अस्माकमिति शेषः। मच्छल्लकृत्तस्य बलभद्रस्य गलाभिधानग्रन्थिच्छिदया छिदुरदुःस्थितिरस्तु। दुःस्थितिः मित्रप्रधानस्य विपरीतबुद्ध्यान्तरां चाञ्चल्यम्। तस्या ग्रन्थिर्दुःस्थितिबन्धहेतुः बलभद्रगलाभिधानः, तस्यच्छेदे दुःस्थितिः स्वयमेवच्छिन्ना भवेत्। मधुसूदनेन मैत्री कथं दुःस्थितिमती भवेदित्यत्राह—अन्तर्भवता बलभद्रस्येति शेषः, निरन्तरमन्तर्वर्तमानेन न तु बहिः कार्यक्षमेण, रिपुणा सुयोधनेन सख्यबन्धेन सुहृद्भावनिर्बन्धेन प्रेङ्खोलिता चलिता, न त्वपनीता। अत एव दुःस्थितिरित्युक्तम्। अस्माकमकृत्रिममित्रत्वेऽपि विपक्षपक्षपातिनोऽसमीक्ष्यकारिणः शिरश्छेदेन स्थिराया वासुदेवमैत्र्याः दौःस्थित्यमपनयामि। मत्प्रियायास्तव मद्गौरवमेवापेक्षितम्। अतस्तदर्थमनुकूला भवेति भावः॥ ६॥

एवमस्याध्यवसायं ज्ञात्वा तन्निरोधाय नायिका सानुवर्तनमाह—आर्यपुत्रेत्यादि। शैशवादारभ्येत्यनेन नित्यानुबद्धत्वं प्रकाश्यते। तव चरणकमलगतमनुरागं पक्षपातं निरूप्य, विपक्षविरोधं विस्मृत्येति शेषः। कुलविनाशकारिणी समर्त्रा सकुलं नाशितवतीति लोकापवादानां यथा भाजनं न भवामि, तथा कुरु। भक्तायां मयि कारुण्येनेममध्यवसायं परित्यजेत्यर्थः॥

स्तदा त्वद्वाप्पजलैरप्यप्रतिविधेयवेगा मद्विशिखमुखशिखिनः। तदधुना यथाभिमतं वाह्यतां रथः।

विदूषकः—(क) भोदि! जाव एसो पुणो वि जस्स कस्स वि आगमणमत्तं सुणिअ जावोसेण णो कण्णं फोडेइ, ताव तुरिअं वाहेहि रहं।

सुभद्रा—(ख) अणुग्गहिदह्मि अय्यउत्तेण। (रथं वाहयति)

धनञ्जयः—(सविस्मयम्) सुन्दरि! अप्रतर्क्योऽयं तव सारथ्यशिक्षातिशयः। कुतः—

लक्ष्यः क्षेपः खुराणां न वियति न भुवि
व्यायतान् नूनमङ्घ्री-
नश्वा नावक्षिपन्ति क्षपितविचलिता
नाप्यमूनुत्क्षिपन्ति।

---

(क) भवति! यावदेप पुनरपि यस्य कस्याप्यागमनमात्रं श्रुत्वा ज्याघोषेण नः कर्णं स्फुटयति, तावत् त्वरितं वाहय रथम्।

(ख) अनुगृहीतास्मि आर्यपुत्रेण।

---

सुन्दरीत्यादिनानुरागबोधानुगुणं तस्याः सारथ्यशिक्षाक्रमं प्रशस्य रथवेगं वर्णयति—लक्ष्य इत्यादिना। क्षपितविचलिता अमी अश्वाः व्यायतानङ्घ्रीन् नावक्षिपन्ति नाप्यमूनुत्क्षिपन्ति। क्षपितविचलिताः वेगप्रयाणानुगुणं रश्मीन् विमुच्य प्रतोदेन ताड्यमानाः विचलिताः[1] प्रयाताः। व्यायतानङ्घ्रीन् पूर्वमेव ऋजुदीर्घसंस्थानान् तदानीमधो न क्षिपन्ति भूमौ न पातयन्तीत्यर्थः[2]। अमूनङ्घ्रीन् नाप्युत्क्षिपन्ति वक्रीकृतमध्यत्वेन नोपरि प्रेरयन्ति, यथापूर्वं धारयन्ति। नूनमिति निश्चयप्राये वितर्के। एव निश्चेतुमेवात्र शक्यमित्यर्थः। कथं गच्छतां पादोन्नमनानमनाभाव इति चेत् तथालक्ष्यमाणत्वादित्याह—खुराणां क्षेपो भुवि न लक्ष्यः।

---

१. 'यः—मु' क. पाठः. २. 'ताः।व्या' क.

यावत् सम्पर्कमेता विदधति पतितै-
श्चाक्षुषैर्नः कराग्रै-
स्तावद् दूरापयाता न खलु तरुलता
बुद्धिमुत्पादयन्ति ॥ ७ ॥

(निष्क्रान्तः सपरिवारो धनञ्जयः)

(नेपथ्ये)

आः दुरात्मन्! पाण्डुकुलपांसन! परमहंसवेषघटितमत्सोदर्योपहरणप्रकटितवीर्यविपर्यास! सव्यसाचिन्! क्क प्रयासि।

---

अवक्षेपे सति लक्ष्यत्वं भवेत्। वियति च न लक्ष्यः, उन्नमनेनेति शेषः। अत उन्नमनावनमनयोरलक्ष्यत्वाद् व्यायतानामङ्घ्रीणां तदवस्थत्वमेव कल्प्यत इति भावः। अत्रोन्नमनावनमनयोरलक्षणे वेगप्रकर्ष एव हेतुः। अन्यदपि वेगकार्यं कथयामि। एतास्तरुलताः पार्श्वयोरग्रे च स्थिताः पतितैर्नश्चाक्षुषैः कराग्रैः नयनरश्मिभिः सम्पर्कं (यावद्) विदधति, अवलोकनविषयभूता भवन्तीत्यर्थः। तावत् तदवधि तदानीमेव दूरापयाताः, बुद्धिं तरुलतात्वेन बोधं नोत्पादयन्तीत्यर्थः। प्राथमिके नयनरश्मिसम्बन्धे वस्तुमात्रबोध एव भवेत्। उत्तरक्षणे सविकल्पकज्ञानम् इयं लता अयं वृक्ष इत्यादि। वेगातिशयेन तादृशस्य बोधस्य नावकाशः सिध्यति। इन्द्रियार्थसम्बन्ध एवातिदूरीभावादित्यर्थः। एवं वेगानुसारेण नायको निष्क्रान्तः॥

अथ प्रेक्षकाणामनुसन्धानसौकर्याय चूलिकया बलभद्रप्रवेशं सूचयति— आः दुरात्मन्नित्यादिना। दुरात्मन्निति दौरात्म्यसमुचितेनाकृत्यानुष्ठानेन तव तिरोहित दौरात्म्यमिदानीं प्रकाशितमिति भावः। अत एव पाण्डुकुलपांसन! तत्कुले त्वमेव कलङ्कहेतुः। कलङ्कमेव प्रकटयति—परमहंसवेषेण घटितः सम्पादितः यो मत्सोदर्यापहारः, तेन प्रकटितवीर्यविपर्यास! अतिक्रान्तत्वेनासम्भावनीयं वेषान्तरमवलम्बमानो मत्सोदर्यामपहृतवान्। अत एव निर्वीर्यत्वं प्रकाशितम्, अन्यथा प्रत्यक्षमेव हर्तव्यम्। एवं स्थिते लोकव्यतिरिक्तं तव सव्यसाचित्वमपि हास्यावहमेव। क्व प्रयासि एवमस्मद्विधिय कृत्वा कुत्र यानस्त्वं शिरोगोपनं करोषि॥

**सभापालः**—(सत्रासम्) असौ समरसंरम्भपिनद्धवर्मणा कृतवर्मणानुगम्यमानः कृतान्त इव क्रुद्धो हलायुधः । अहोतु खल्वमुष्य क्रोधानलदीप्तेन मुहुर्मुहुः परिवर्तमानेन नेत्रयुगलेन परिवर्तित इव सकलो जीवलोकः ।

(ततः प्रविशत्यपटाक्षेपेण कृतवर्मणानुगम्यमानो यथानिर्दिष्टः क्रुद्धो हलायुधः ।)

**हलायुधः**—(आः दुरात्मन्नित्यादि पूर्वोक्तमेव पठित्वा)

पातालं चेद् व्रजेस्त्वं तदपि गिरिशतैः
पूर्णयन् चूर्णयेयं
गीर्वाणौकः प्रयायाः सपदि हलमुखा-
कृष्टमूर्ध्वाण्डखण्डम् ।
कृत्वा निष्पेपयेयं बहुतरकथया
किञ्च यत्र कचित् त्वां
जीवन्तं नैव मृष्यत्यरिरुधिरवसा-
पिच्छिलं लाङ्गलाग्रम् ॥८॥

---

एतच्छ्रवणानुसारेण पश्यन्नाह सभापाल —**अहोतुखल्वित्यादि** । क्रोधानलदीप्तत्व क्रोधकृत मुहुर्मुहु परिवर्तन च नयनयोर्विपयभूतस्य जीवलोकस्य परिवर्तनोत्प्रेक्षाया निमित्तम् । अवलोकनमात्रेणैव जीवलोकस्योपर्यधोभाव क्रियतेवेत्यनेन क्रोधस्यासह्यता प्रकाश्यते ॥

**यथानिर्दिष्ट** इति पूर्वोक्तो रोद्रताप्रकार प्रवेशेऽनुसर्तव्य इति नटस्योपदेश ॥

पूर्वोक्तमेव पठित्वेति तच्छेषतयोपरि व्यवहार इति सूचितम् । क प्रयासीत्यत्र न कापि प्रयातु शक्यमिति परिकल्प्य कापि रक्षा न सिध्यतीत्याह —**पातालं चेदित्यादिना** । अस्मिन् लोके कुत्रापि न स्थातु शक्यमिति निश्चय । पुना रक्षार्थ पाताल व्रजेर्यदि तदपि पातालमपि । अपिशब्देन दुष्पूरत्व सूचितम् । गिरिशतै

---

१ 'ण य' क पाठ   २ ''ध कृतवर्मा च)' क 'ध ) आ' ख पाठ

कृतवर्मा—(सोद्वेगम्) अहो दुरवबोधः खलु विधेः प्रक्रमः। कुतः—

पातारौ बलभद्रकंसमथनौ सेयं पुरी द्वारका
प्रोत्सिक्ताः पृथुबाहुनिर्जितजगच्चक्रा वयं वृष्णयः।
तां भद्रामहरत् स पाण्डुतनयः कष्टं मृगः प्रस्थितो
भित्त्वा दिग्गजकुम्भमण्डलतटीमाच्छिद्य[1] मुक्तावलीम्॥९॥

---

पूर्णयन् पूर्णं कुर्वन् चूर्णयेयं नीरन्ध्रतामापाद्य तव पातालस्यापि चूर्णतां करोमि। अथवा गीर्वाणौकः देवसदनं प्रयायाः यातुं शक्नोषि यदि, तदप्यूर्ध्वाण्डखण्डं ब्रह्माण्डस्योर्ध्वभागमित्यर्थः। हलमुखेनाकृष्टं कृत्वा निष्पेषयेयम्। तत्राप्युभयोर्निष्पेषकर्मत्वम्। ऊर्ध्वाण्डखण्डे हलमुखेनाधः समाकृष्टे सति तत्पातेन गीर्वाणौकोऽपि चूर्णीभवेदिति भावः। बहुतरकथया किं गन्तव्यदेशविकल्पादिरूपया किं फलम्। यत्र क्वचिद् उक्ते वानुक्ते वा प्रदेशे जीवन्तं प्राणधारिणं त्वामस्मदपकारिणं लाङ्गलाग्रं नैव मृष्यति नैव सहते। त्वज्जीवनमपहृत्यैव कृतार्थं भवति, यतः अरिरुधिरवसापिच्छिलमरीणां रुधिरवसाभिर्देहाभिघातलग्नाभिः पिच्छिलं क्लिन्नं, न त्विदंपूर्वं पराक्रमप्रवृत्तम्। तादृशं कथं परिभवं सहतामिति भावः॥ ८॥

एवं बलभद्रस्य रौद्रवचनमाकर्ण्य तदनुसारी कृतवर्मा तत्कोपनिमित्ते पाण्डवव्यापारे वैराग्यमवलम्बमान आह—अहो इत्यादिना। विधेः प्रक्रमः दैवव्यापारः दुरवबोधः इदमेवं युक्तमित्युपपत्तिकल्पनागोचरः। दैवकृत एवायं समारम्भः, न पौरुषसाध्य इति तात्पर्यम्। तदेव विशदयति—कुत इत्यादिना। **बलभद्रकंसमथना**वित्यादीनि साभिप्रायाणि पदानि। पातारौ रक्षितारौ। सर्वस्येति शेषः। तत्रापि द्वौ न त्वेक एव। तत्रापि विशेषः बलभद्रकंसमथनौ जगत्पालनसमर्थौ। रक्षितृगौरवमेव न, स्थलस्यापि समुद्रान्तरालवृत्तित्वाद् दुर्गमत्वमे[2]वेत्याह—सेयं पुरी द्वारकेति। न केवलं तयोरेव गौरवं, वयं वृष्णयः एतत्कुलाभिमानिनः। प्रोत्सिक्ता अतीव गर्विताः। न केवलं गर्वं, गर्वकार्यमपि निरूढवन्तः, यतः पृथुबाहुनिर्जितजगच्चक्राः पृथुभिर्बाहुभिरेव पृथुत्वानुगुणविक्रमैः परिभूतभुवनमण्डलाः।

---

१. 'टीराच्छि' ख. पाठ.. २. 'गत्व' ख. पाठः.

**सभापालः**—— (सभयम्) पार्थकृतपरिभवपरिवर्धितकोपानलवपुः पुरा सोऽयं संहरति भुवनत्रयम्। तावदहमिममुदन्तं देवाय देवकीनन्दनाय निवेदयिष्ये। (निष्क्रान्तः)

**हलायुधः**—— (सावज्ञम्) कृतवर्मन्! किमेकेन फल्गुनहतकेन।

पञ्चानां पाण्डवानां प्रतिभयमुसलो-
द्घातनिर्घातपात-
क्षुण्णश्लक्ष्णास्थिचूर्णान् हलमुखदलितान्
विग्रहान् विग्रहे मे।

---

न खलु भुवनेषु कश्चिदप्यस्मदग्रे स्थातुं समर्थः। एवं स्थितेऽपि स पाण्डुतनयस्तां भद्राम् अस्मत्कुलमङ्गलभूतां कन्यकाम्। स स्वपक्षकृतपरिभवप्रतीकारासमर्थः। अहरत् न तु हरति चौर्येण नीतवान्। विधिवैपरीत्यमेवात्र निमित्तमिति दुरवबोध इत्युक्तम्। अस्यार्थस्य दुर्घटत्वं निदर्शनया प्रकाशयति—दिग्गजेति। मृगः स्वत एव निस्सारो हरिणः। दिग्गजस्य न तु यस्य कस्यचित्। कुम्भमण्डलतटीं कुम्भमण्डलप्रदेशमतिदुरारोहम्। भित्त्वा विदार्य न तु पूर्वमेव भिन्नमनुसृत्य। मुक्तावलीं तत्र वर्तमानाम्। आच्छिद्य बलादाकृष्य। आवलिशब्देन साकल्येनाकृष्टत्वात् कुम्भस्य शोच्यतागमनं प्रकाश्यते, तेन प्रकृतस्यापि। प्रस्थितः निष्प्रतिबन्धं निर्गतः। इदं यथासम्भावनीयं भवति, एवं प्रकृतमपीति सम्बन्धः॥ ९॥

**पुरा** संहरति झटिति संहरिष्यति भुवनत्रयम्, न केवलमपराधिनम्। तावदिति ततः प्रागित्यर्थः। पुरा संहरतीति "यावत्पुरानिपातयोः" (३-३-४) इति लट्॥

अपराधिन एकस्यैव प्रतिपरिभवविषयताकल्पनेनात्मप्रवृत्तावज्ञा। तदेवाह—**किमेकेनेत्यादि**। अपराधिन एकस्यैव न निग्रहः क्रियते, तद्द्वारा सर्वेषामपत्याभिप्रायेणाह—**पञ्चानामित्यादि**। विग्रहे सङ्ग्रामे। पञ्चानां पाण्डवानां विग्रहान्, न त्वेकस्य द्वयोर्वा त्रयाणां वा, सर्वेषामेव। मे हलमुखदलितान् हलाग्रेण भिन्नान्। पुनः प्रतिभयेन भयावहेन मुसलोद्घातेन मुसलताडनेनैव निर्घात-

---

१. 'स पुरा' क पाठः  २ 'यामि।' क पाठः

पायंपायं प्रभूतं विगलितमसृजां
पूरमाकण्ठपूरं
खादन्तु क्षीणकुक्षिस्तनहनुतनवः
प्रीतिमत्यः पिशाच्यः ॥१०॥

**कृतवर्मा** — देव ! सैषा सप्तसमुद्रीं धरित्रीं क्रोडीकर्तुकामा कौरवादी[1]नामतिगरीयसी लक्ष्मीः, यया प्रेरिताः पाण्डुतनया मित्रमिहभवन्तं शात्रवयन्ति ।

**हलायुधः** — तेऽपि तावदासतामवज्ञातसकलक्षत्रमण्डलाः कौरवपशवः, यतिपितृव्यतनयाः पाण्डुदायादाः । अपिच मत्क्रोधहुतभुजि रिपुजीवितलिहि देदीप्यमाने —

पातेन संपिष्टापरुषीकृतास्थिचूर्णान् । तच्चूर्णसंवलितं[2] हलमुखदलनेन विगलितमसृजां पूरं पिशाच्यः पायपायं खादन्तु । अत्रास्थिचूर्णानां खादनकर्मत्वमर्थात् सिद्धम् । आकण्ठपूरमित्यनेनासृजां बाहुल्यं प्रकाश्यते । क्षीणकुक्षिस्तनहनुतनव इत्यनेन तासां पानखादनाधिकारः प्रकाशितः । अत एव प्रीतिमत्य इत्युक्तम् । अत्रास्थिचूर्णानां विगलितानामसृजां पिशाचीनां रूपविशेषस्य च निर्देशेन बीभत्सभयानकयोरीषत् प्रकाशनेऽपि रौद्रपोषकतया न शृङ्गारेणाङ्गिना विरोधः ॥ १० ॥

सैषेत्यादि । पूर्वमिदानीमप्यपरिक्षीणा । कौरवादीनां सुयोधनादीनाम् । लक्ष्मीः साम्राज्यश्रीः । सप्तसमुद्रीं सप्तसमुद्रसमाहारम् । क्रोडीकर्तुकामा अन्तर्भावयितुकामा सप्तद्वीपवतीं भुवं स्वीकर्तुकामा, न केवलं जम्बूद्वीपमित्यर्थः । यया प्रेरिता इति तल्लक्ष्म्या वर्धिष्णुतैवैतानेवं प्रेरयति, अन्यथा तेषामप्यर्धराज्यस्थित्या समग्रता न भवेदिति भावः । मित्रम् एतावन्मात्रम् । इहभवन्तं पूज्यतमं त्वामनिष्टाचरणेन शत्रुं कुर्वन्ति । त्वयि विरुद्धे कौरवा एतद्राज्यमपहरिष्यन्त्येवेति भावः ॥

तेऽपि तावदिति । न केवलं पाण्डवा आसताम् । तत्सब्रह्मचारिण एवेत्यर्थः । अत्र हेतुः — अवज्ञातसकलक्षत्रमण्डला इति । यतिपितृव्यतनया इति । अमी सम्बन्धितयैकपक्षस्था एवेत्यर्थः । अत एव तानाक्षिप्याह — मत्क्रोधेत्यादि । रिपुजी-

१. 'णाम' मूलकोशपाठः. २. 'तह' क. पाठः.

क्षिप्तभ्रश्यच्छिरस्कैर्दृढविहितकचा-
कृष्टिभिर्मुष्टिबन्धै-
र्निष्पिष्टोरःकवाटस्फुरितशिखिशिखा-
श्रेणिशोणैः शरीरैः ।
दुर्वारे द्वन्द्वयुद्धे भियमतिशयिनी-
मादधानाः परेषा-
मद्यारभ्य प्रवीराः समरभुवि कुतः
कौरवाः सञ्चरन्ति ॥ ११ ॥

(सावष्टम्भम्) अथवा तिष्ठन्तु तावदस्मद्भुजबलपराक्रमविस्फूर्जथोरपर्याप्तवीर्यप्रसराः पृथ्वीवलयनिलयास्तपस्विनः पृथ्वीपतयः ।

दृप्तद्विषद्बहललोहितपूरशार-
सीराग्रकोटिपरिघट्टितसन्धिबन्धः ।

---

वितलिहि न वृथा निर्वाणयोग्ये । देदीप्यमाने भृशं दीप्तिं गच्छति । **कौरवाः** समरभुवि कुतः कस्माद्धेतोः किमवलम्ब्येत्यर्थः । न सञ्चरन्त्येव, कुतो युध्यन्ति । अद्यारभ्येति पूर्वं न तथा । दुर्वारे द्वन्द्वयुद्धे एवम्भूतैर्वीरधर्मप्रवृत्तैः शरीरैः, न प्रहारेणैव । दृढविहितकचाकृष्टिभिः अत एव क्षिप्तभ्रश्यच्छिरस्कैर्मुष्टिबन्धैः करणैः निष्पिष्टोरःकवाटैः परेषां शरीरैः । तेषामेव हतशेषाणां भियमादधानाः इतःपूर्वम् । इदानीं सञ्चरणमपि संहरामीत्यर्थः ॥ ११ ॥ अथ कोपस्यासह्यत्वेनाह—अथवेत्यादि । अस्मद्भुजबलपराक्रमाणां विस्फूर्जथोः प्रकर्षस्यापर्याप्तवीर्यप्रसराः एतत्प्रातिकूल्यासमर्थवीर्या इत्यर्थः । पृथ्वीवलयनिलयाः भूखण्डमात्रपरिमिताः । कः पुनः पराक्रमविषय इत्यत्राह — दृप्तेत्यादि । दृप्तानां द्विषता बहलेन लोहितपूरेणाभिघातजनितेन शारस्य शबलस्य सीराग्रस्य कोट्या परिघट्टितश्श्लथितः विश्लेषं नीतः सन्धिबन्धो यस्य । सत्यावधिः सत्यलोकावधिः, अखण्डं ब्रह्माण्डमित्यर्थः । अत एव

---

१. 'जप' क. पाठः.

सत्यावधिः ससुरदैत्यगणः सकृन्मे
लोकः स एष सहतां मुसलाभिघातम् ॥ १२ ॥

**कृतवर्मा** — देव ! अलमिदानीमात्मानममर्षाय दत्त्वा, दैवदत्तायुषा दूरमन्तरमपयातेन पाण्डवपशुना भवितव्यम् । तद् देवेन शार्ङ्गधन्वना सह सम्प्रधार्य प्राप्तमत्र प्रतिविधास्यामहे ।

(ततः प्रविशति प्रहृष्टो वासुदेवः सात्यकिश्च)

**वासुदेवः**[2] — (सानन्दम्) सात्यके ! निजशस्त्रशल्यशिखिभिरभस्मीकुर्वन्नन्धकानादाय माधवीमपयातः किल धनञ्जयः । अपि च —

ज्योत्स्नां चन्द्रमसा द्युतिं दिनकृता हव्याहुतिं वह्निना
जीमूतेन शतह्रदां सुरभिणा मासेन पुष्पश्रियम् ।

---

ससुरेत्युक्तम् । सकृत्, न द्विवारम् । सीराग्रेण घट्टनं मुसलेन हननं चैकवारं कृतं भुवनं चूर्णयेदित्यर्थः ॥ १२ ॥

दैवदत्तायुषेति । इदमेवास्य दूरापयाने निमित्तम् । अन्यथा त्वयि कुपिते कथं दूरीभवेत् ॥

अथ वासुभद्रप्रवेशः । प्रविष्टः स्वाभिहितसिद्ध्या सात्यकिं प्रति सानन्दमाह—निजेत्यादि । निजशस्त्रधाराग्निज्वालाभिरभस्मीकुर्वन्निति । मित्राणामपि साध्यविरोधे बलाद् वध्यता भवेत् । तथा सति साध्यस्य सदोषत्वं भवेत् । आदाय माधवीमिति । साध्यसिद्ध्या मित्रस्यानिग्रहेण च यानस्यानन्दकरत्वम् । तत्र स्वकौशलमेव निमित्तमिति तत् प्रशंसन्नाह—ज्योत्स्नामित्यादि । वार्ष्णेयीम् अभिजनादिगुणविशिष्टाम् । बलभित्सुतेन तादृशेन । प्रथममभिजन्मकथनं मुख्यतया गुणान्तरोपलक्षणम् । घटयन् योजयन् । परस्परास्थां पोषयित्वा विरोधिपरिहारेण योजयन् । अस्माद् वेधसोऽभिन्नः । समानव्यापारदाक्ष्या-

---

१. 'ना सम्प्र' ख. पाठः. २. 'वः—गाल' ग. पाठः. ३. 'रन्धीषु' ग. पाठः.

य: कान्तिं कमलाकरेण घटयामास ध्रुवं वेधसो
वार्ष्णेयीं बलभित्सुतेन घटयन्नस्मादभिन्नोऽस्म्यहम् ॥१३॥

सात्यकिः — साम्प्रतमाह देवः । अस्थाने पुनरत्रभवानाविष्टो हलायुधः । कुतः —

कौन्तेयं शशधरवंशमौलिरत्नं
प्राणेभ्यः प्रियतरमात्मजं मघोनः ।
प्राप्तायां स्वसरि वरं प्रमोदकाले
सम्मोहः किमयममुष्य सीरपाणेः ॥ १४ ॥

तद् देवेन देवः प्रशान्तकोपः करणीयो रौहिणेयः ।

हलायुधः — कृतवर्मन्! मैवं वादीः । तमतिदूरान्तरगतमपि दुरात्मानमेषा सीरकोटिरनासाद्य न निवर्तते । तदनुव्रजामि तावदेनम् । (उद्धत परिक्रामति)

---

देकरूपः, समान इत्यर्थः । अतोऽनेकवस्तुसङ्घटनेन वस्तुद्वयसङ्घटनं समीकृतमित्यस्य लोभनीयत्वं दुर्घटत्वं च प्रकाश्यते । किञ्च अतिसौम्यतया क्षात्रतेजोयुक्ततया सत्कर्मसङ्ग्रहपात्रतया परस्परपरंभागलाभेन विशिष्टोपभोगयोग्यतया लक्ष्मीनिधानकान्तिमत्तया चास्य वस्तुद्वयस्य घटने वस्त्वन्तरगुणसामर्थ्याद् बहूनां घटकेन वेधसा साम्यमित्यभिन्न इत्युक्तम् । अत्र मित्रकृत्यसाधनेन कृतार्थता प्रकाश्यते ॥ १३ ॥

साम्प्रतं युक्तम् । कौन्तेयमित्यादि अस्थानकोपस्यानौचित्यं प्रकाशयति । कौन्तेयत्वादीनि प्रमोदयोग्यतानिमित्तानि । प्राप्तायामिति स्वप्रयत्नसाध्ये स्वयमेव सङ्गतायामित्यर्थः ॥ १४ ॥ तद् देवेन भवता प्रशान्तकोपः करणीयो रौहिणेयः ॥

कोपस्यानपनीतत्वान्मैवं वादीरिति । कृतवर्मणा दूरापयानकथनममहमान आह — दूरापयातत्वेऽपि सीराग्रकोटिरनासाद्य न निवर्तत इति ॥

---

१. 'सद्दर्पण.—दृ' रा पाठः. २. 'रिभोग' क. पाठः

वासुदेवः—(उपसृत्य प्रणामं कुर्वन्[1]) प्रसीदत्वार्यः। आर्य! कोऽयमात्मीयेष्वनुचितः कक्ष्याबन्धः। प्रतिसंह्रियता[2]मयमतिवेलतीव्रः कोपवह्निः।

हलायुधः—(विलोक्य) वासुभद्र! कथमात्मीयेष्विति—

कुर्वन् कौरुकुचीं वृत्तिमातिष्ठन्नन्त्यमाश्रमम्।
अपहर्ता सुभद्रायाः क्व वयं क्व धनञ्जयः॥ १५॥

वासुदेवः—कस्यायमपराधः। नन्वार्य एव तावत् तं मस्करिवेषप्रतिच्छन्नं कुमारीपुरे विनिवेश्य साम्प्रतं कस्मै क्रुध्यति।

[3]हलायुधः—वासुभद्र! परवञ्चनापटीयसां पापीयसामशक्याव-

कोऽयमात्मीयेष्वित्यादि। आत्मीयत्वात् कोपस्यानौचित्यम्॥

तदसहमान आह—कथमात्मीयेष्विति। आत्मीयत्वोचितो नास्य व्यापार इत्यर्थः। तत् साधयति—कुर्वन्नित्यादिना। कुरुकुचो नाम मर्मघाती कश्चित् पक्षिविशेषः। तद्वृत्तिर्मर्मघातः। स खल्ववयवान्तरेषु सत्स्वपि मर्मस्थानमेव कृन्तति। अयमप्यप्रियेष्वन्येषु शक्येष्वप्यतिपीडाकरमेव चौर्येण कृतवानिति तद्वृत्तिकरणम्। तद् विवृणोति—सुभद्राया अपहर्तेति। किमतः परं पीडाकरमिति भावः। तत्रापि चौर्यनिर्बन्धः—आतिष्ठन्निति। अन्त्यमाश्रममस्माकमविहितम्। आतिष्ठन् न खलु रावणवद् यदृच्छया तत्परिग्रहः, अस्मत्समक्षमेव बहूनि दिनानि तत्रैव वर्तमानः। क्व वयमिति कथमनुचितकारिणः पीडाकरस्य मित्रभावेनास्मत्सन्निवेशो घटते। कथं काचस्य मणीनां चैककोशसन्निवेशः॥ १६॥

नन्वार्य एवेत्यादिना तदानीमात्मानङ्गीकारः प्रकाशितः। अत एवानागतावेक्षणेन "आर्य एव प्रमाणम्" इति तदानीमनास्थाप्रकाशनम्॥

---

१. 'न्) आर्य!' ख. पाठः. २. 'मर्ग' ग. पाठः. ३. 'दृष्टवनः- मा' ख. पाठः.

बोधानि खलु दुश्चेष्टितानि । अत एव विस्रब्धवञ्चयिता वध्यः । उपेक्षतां च भवानाकस्मिकपक्षपातपरवशः पापिनः पाण्डुतनयान् । अपि च[1] —

अस्मच्छस्त्रकठोरपातपदवी-
वान्तास्रपूरच्छटा-
नैपथ्यान् करवालकृत्तशिरसः
पार्थानपार्थायुधान् ।
प्रेक्षन्तां पिशिताशिनः प्रियतमा-
कण्ठप्रसक्तैर्भुजै-
रारब्धारभटीनविक्षतघटा-
बन्धाः कबन्धान् रणे ॥ १६ ॥

सात्यकिः — देव ! देवस्यास्य सम्भाव्यतां भ्रातुरतत्र कंसशत्रोरनुनयः । अनुपलक्षितफलश्च लघूक्रियतामयमतिदुर्भरसंरम्भातिभारः ।

विस्रब्धवञ्चयिता विश्वस्तानां वञ्चयिता । आकस्मिकेन निर्निमित्तेन पक्षपातेन विवशः । अत एवोपेक्षाया न दोषः । पुनः किं क्रियत इत्याह — अपि चेत्यादि । अस्मच्छस्त्राणां कठोरपाते दृढपाते या पदवी रुधिरनिर्गममार्गः शिरश्छेदेन प्रागेव वा, तेन वान्ताः स्रुताः अस्रपूरस्य धारा एव नैपथ्य येषाम् । नटने तदौचित्यान्नैपथ्यारोपः । करवालकृत्तशिरस इति कबन्धोत्थापनाय । पिशिताशिनः प्रेक्षकाः । प्रियतमेत्यादि प्रेक्षासौख्याय । अत एवारब्धारभटीन् प्रवर्तितोद्धतनृत्तान् इति नृत्तगौरवकथनम् । अविक्षतघटाबन्धाः सङ्घीभूताः । पार्थान् कबन्धानिति शिरश्छेदेन कबन्धतां प्राप्तानित्यर्थः । तेषां नटत्वारोपः । कबन्धानां शिरश्छेदेऽपि चलनप्रसिद्धेरेवमुक्तिः ॥ १६ ॥

१. 'च । अहमयीव तावद्–अस्म' ख पाठः २ 'उप' ख. पाठः.

**कृतवर्मा**--(सक्रोधम्) सात्यके! अतिक्लीबमभिहितं भवता। अपूर्वपरिभवबद्धमूलः समुचितरथानवर्ती केन खलु मनस्विना मधुकुलसम्भवेन निवारणीयोऽस्य कोपानुबन्धः। अपिच स पाण्डुतनयः—

अविदितभयमार्गं मार्गणैः शात्रवाणां
प्रविजयि मधुसैन्यं मन्यमानस्तृणाय।
कलितकतिपयास्त्रप्राप्तमिथ्याभिमानः
पशुरयमनुपेक्ष्यो मूर्ध्नि नः क्षिप्तपादः॥ १७॥

**सात्यकिः**—(सक्रोधम्) आः दुरात्मन्नयं तावदरिष्वप्रतिहतपराक्रमः कुप्यतु किरीटिने कामं कामपालः। भवादृशाः पुनर्जन्मनः प्रभृत्यपरिचितवीरवीथयः भुवनैकधनुर्धरं धर्मानुजन्मानमस्मदाचार्यमधिक्षिपन्तीत्यहो बलीयाननात्मज्ञानामवलेपः। अपिच—

---

अनुपलक्षितफल इति सात्यकिवचनेन कृतवर्मणः कोपः। **क्लीबम्** अकार्यकरम्, तुच्छमित्यर्थः। तदुपपादयति—अपूर्वेत्यादिना। अपूर्वोऽजातपूर्वः। **अविदितभयमार्गम्** अविदितभयस्वरूपं स्वयं भयजनकत्वात्। अत एव मार्गणैः शात्रवाणां प्रविजयि प्रकर्षेण जयनस्वभावं मधुसैन्यं कर्म। कलितैः कतिपयैः, न तु सकलैः। अत एव तन्निमित्ताभिमानप्राप्तेर्मिथ्यात्वम्। पशुः कातरः। तेनैव वञ्चनवान्। अनुपेक्ष्यः रोद्धव्य एवेत्यर्थः। अनपेक्ष्य इति पाठे प्रश्नगर्भकाकुयुक्तं वचनम्। मूर्ध्नि नः क्षिप्तपाद इति परिभवातिशयो लक्ष्यते। शिरसि पादनिधानस्य परिभवहेतुत्वात्॥ १७॥

---

१. 'अन्यदभि' ग. पाठः.

प्रलम्बनरकद्विषौ सपदि सन्निधत्तो न चेद्
गुरोर्मम धनञ्जयादधिगतोऽयमस्त्रांशकः ।
तमित्थमतिनिन्दतः शितकठोरघोराननः
प्रवक्ति नृपशोस्तव प्रतिवचः करोम्यत्र किम् ॥ १८ ॥

कृतवर्मा[1] — (सक्रोधम्) रे रे वृष्णिकुलकीट!

यतः प्राप्तास्त्रांशः परुषमवलिप्तः प्रलपसि
प्रमथ्याजौ तस्य प्रबलमवलेपं छलमुनेः ।
प्रलापैरत्रालं गगनतलनीलच्छविरिदं
निकृत्तं नाकृत्वा विरमति ममासिस्तव शिरः ॥ १९ ॥

वासुदेवः — (सक्रोधं[2] उभौ पश्यन्) को नाम युवयोरन्तरेण पार्थमय-

---

प्रलम्बेत्यादि । प्रलम्बनरकयोर्द्विषौ सन्निधत्तो न चेत् सन्निधिस्थितौ न चेदिति तत्समीपस्थितिरेव सपदि कर्तव्यविघ्नहेतुरित्यर्थः । मम गुरोर्धनञ्जयादधिगतः गृहीतः । अयम् अतिविधेयः । अस्त्रांशकः अंशमात्रस्यैवात्रापेक्षेत्यंशग्रहणम् । तदाक्षेपानुसारेण वा । अस्त्रांशक इति शस्त्रास्त्रयोरभेदोपचारः । तमित्थमतिनिन्दत इति प्रतिवचनयोग्यत्वम् । शितम् उत्तेजितं कठोरं कठिनम् अत एव घोरमाननं यस्य । प्रतिवचनशेषतयाननग्रहणम् । प्रलम्बनरकद्विषौ सन्निधत्तो न चेद् अस्त्रांशकस्तत् प्रतिवक्ति । इदानीमेव त्वद्वचःप्रतिवचनं कुर्यादित्यर्थः । अत्र एतत्सन्निधौ किं करोमि उचितरयाशक्यत्वात् तूष्णीमासे इत्यर्थः ॥ १८ ॥

यत इत्यादि । यस्मात् प्राप्तास्त्रांशः प्रलपसि, तस्यच्छलमुनेरिति सम्बन्धः । प्रलापैरित्यादि वाक्यगर्भितः संरम्भगुणः । असिस्तव गुरुं निहत्य । इदं छेदे निकटलभ्यं तव शिरः निकृत्तमकृत्वा न विरमति निकृत्यैव विश्राम्यतीत्यर्थः । अत्र क्रियां विना किं मध्ये प्रलापैरिति क्षेपः । गगनतलेत्यादि प्रत्यग्रधौततया छेदसौकर्यार्थम् ॥ १९ ॥

---

१. 'र्मा—रे' ख. पाठः. २. 'धमुभौ' क. ख. पाठः.

माकालिकः कलहप्रसङ्गः । तज्जोषमासातां भवन्तौ ।

(सात्यकिकृतवर्माणौ प्रयत्नस्तम्भितरुषौ तूष्णीं तिष्ठतः)

वासुदेवः—आर्य ! इदं तावदपनीतामर्षसन्तमसेन समञ्जसेन मनसा समालोचनीयं—

दुर्लभगुणगणनिलये मनोरथेनापि दुर्लभेऽस्माभिः ।
पार्थे हरति सुभद्रां का नाम रुषः प्रसक्तिर्नः ॥ २० ॥

हलायुधः—वासुभद्र ! त्वं तावत् तत्कृतां न्यक्कृतिमनुग्रहं मन्यसे । लोकस्तु पुनरमुष्मिन्नकृतप्रतीकारानस्मानसमर्थान् समर्थयते ।

वासुदेवः—आर्य ! अलमुत्तरोत्तरकथाभिः । पितुर्नः स्वस्रीयतां पृथायाः पुत्रतां मित्रतां च मम समाकलय्य सुरपतिसूनावपनीतामर्षसन्तमसेन साम्प्रतमनुग्रहणीयोऽहमार्येण ।

---

अपनीतामर्षसन्तमसेनेति । वस्तुनिरोधकत्वादमर्षस्य सन्तमसत्वारोपः । समञ्जसेन प्रसन्नेन । इदमिति वक्ष्यमाणम् । समालोचनीयमिति अस्मदुक्तिं विनेत्यर्थः । दुर्लभेत्यादि । अन्यत्र दुर्लभानां गुणगणानां न त्वेकस्य द्वयोर्वा, निलये एकाश्रये । अत एव मनोरथेनाप्ययमस्माकं सम्बन्धी स्यादिति निरूपयितुमघटमाने, वैसादृश्यात् । पार्थे सम्बन्धयोग्ये । सुभद्रां गुणवत्प्रदानार्हाम् । हरति, अस्मत्प्रार्थनं विनेति शेषः । रुषः प्रसक्तिः प्रसङ्गः । का नामेति हर्षस्यैव योग्यत्वमित्यर्थः ॥ २० ॥

न्यक्कृतिं बलादपहरणम् ॥

पितुः स्वस्रीयतामित्यनेनैव सम्बन्धे सिद्धे पृथायाः पुत्रतामिति तस्या गुणगौरवस्यापि निमित्ततां प्रकाशयितुम् ॥

---

१. 'मधु' स. पाठ

•हलायुधः --- (करेण करं पिंषन्) कष्टं भोः कष्टं—

परिक्षतं परिभवपत्रिणा मन-
स्तदक्षमं क्षमयितुमक्षमा वयम् ।
अकर्तुमप्यनुनयगर्भिणीर्गिरो
न शक्नुमस्तव धिगहो हता हताः ॥ २१ ॥

(कथमपि क्रोध प्रतिस्तम्भयन् निष्क्रान्त , कृतवर्मा च)

सात्यकिः --- देव! उपशमित इवेदानीमन्तःक्षोभार्णवबडवानला[2]यमानो रौहिणेयः कोपपावकः ।

वासुदेवः --- सात्यके! एवमेतत् । त्वं तावदितो गत्वा मद्वचनादार्यकोपोपशममिममवबोध्य प्रशान्तप्रक्षोभं सम्भृतविविधहरणद्रविणोपकरणमन्धकचक्रमापाद्य शौवस्तिकाय प्रयाणाय सन्नाहय[3] । वयमपि —

परिक्षतमित्यादि । परिभवपत्रिणा परिभवरूपेण शरेण । परितः क्षतं व्याकुलीकृतम् । तदक्षमं परिभवाक्षमम् । असह्यपरिभवमित्यर्थः । क्षमयितुं क्षमायुक्तं कर्तुम् । तवानुनयगर्भिणीर्गिर. अकर्तुमप्यक्षमाः । उभयासामर्थ्येन धिगिति कुत्सनम् । उभयप्राबल्येन अहो इति कथनम् । उभययात्मनोऽभिप्रायभङ्गाद् हता हता इति वैराग्येणोक्ति ॥ २१ ॥

उपशमित इवेत्यादि । रौहिणेयः कोपपावकः रोहिणेयसम्बन्धी रौहिणेय.। अन्त.क्षोभार्णववडवानलायमानः अर्णवतुल्ये चित्तक्षोभे वडवानलवत् प्रकाशमानः । क्षोभान्तरालपतितत्वेन रौद्रत्वेन च वडवानलतुल्यत्वम् ॥

त्वं तावदित्यादि । सम्भृतविविधहरणद्रविणोपकरण विविधानि मणिहिरण्यादीनि, हरणद्रविणानि स्त्रीधनानि, उपकरण छत्रयानादि । शौवस्तिकाय प्रया-

१. 'न्)प' क पाठ २ 'बडवाय' ख. पाठः ३. 'य । सात्यकिः–यदाज्ञापयति देवः । वासुदेव.–व' क. पाठ'.

प्रणयगुरुभिरार्यस्यानुकूलैर्वचोभि-
मर्नसि गलितशेषं रोषमुन्मूलयन्तः ।
सह मुदितमनोभिस्तस्य वृष्णिप्रवीरै-
र्ध्रुवमभिमतयामः खाण्डवप्रस्थयात्राम्[1] ॥ २२ ॥

सात्यकिः — यदाज्ञापयति देवः ।

(इति निष्क्रान्तौ)

इति चतुर्थोऽङ्कः ।

---

णाय श्वो भाविने गमनाय । सन्नाहय सन्नद्धं कारय । वयमपीति अभिमतयाम इति सम्बन्धः । प्रणयगुरुभि. प्रणयेन याच्ञया स्नेहेन वा गुरुभिः उपादेयार्थैः। अनुकूलैः चित्तस्य साध्यस्य च । आर्यस्य मनसि गलितशेषम् । असंवादेन गमनात् शेषकल्पनम् । रोषमुन्मूलयन्तः निरवशेष निरस्यन्त । वचसां करणत्वेन यात्राप्रेरणस्यापि रोषोन्मूलनसहभावित्व प्रकाशितम् । अन्यथोन्मूलयेति वक्तव्यम्। मुदितमनोभिर्वृष्णिवीरैः सहेति यात्रायां सहभावः । ध्रुवमिति नात्र विसंवाद इत्यर्थः । तस्य यात्रामभिमतयाम इति प्रतिकूलस्यैव, तदनुसरणनिमित्तां खाण्डवप्रस्थयात्राम् इन्द्रप्रस्थयात्राम् अभिमतयामः अभिमतां कुर्मः । सर्वथास्माभिस्तत्र गन्तव्यमिति बुद्धिं सम्पादयाम इत्यर्थः । इयताभिलापशृङ्गारस्य परिपोषं प्रकाश्य सुभद्रापरिणयनावधीतिवृत्तं निर्व्यूढम् ॥ २२ ॥

इति विचारतिलकनाम्नि सुभद्राधनञ्जयव्याख्याने

चतुर्थोऽङ्कः ।

---

१. 'त्राम् ॥ (नि' क पाठः.

## अथ पञ्चमोऽङ्कः ।

(तत प्रविशति प्रतिहारक )

**प्रतिहारकः**— भोभोः पौरमहत्तराः! पुरुहूततनयस्य पुण्डरीकाक्षसहजासमेतस्य पुण्डरीकाक्षस्य चागमनमहोत्सवलाभादानन्दपरवशीकृतात्मनो महाराजयुधिष्ठिरस्य शासनात् कुरुत पुरीमिमामघोचोत्रोत्तराम् । तथाहि ---

कार्या पिष्टातकौघैः पिहितरविकरैर्धूसरा वासरश्री-
धूपैर्धूम्रीक्रियन्तां बहलपरिमलैर्दूरमाशामुखानि ।
उच्चैस्तुच्छीकुरुध्वं ध्वजपटपटलैः पावनं मार्गमेताः
पूर्यन्तां पुष्पपूरैर्मधुकरशबलैः सर्वतो राजवीथ्यः ॥ १ ॥

---

अथ सम्भोगशृङ्गारानुसारेण निर्वहणभाग प्रकाशयितु पञ्चमाङ्कोपक्रम । तत्र पुरप्रवेशोपक्रमादिसूच्यार्थसूचनार्थमङ्कात् प्राक् प्रतिहारचेटाप्रवेशेन विष्कम्भकोपन्यास । प्रविष्ट प्रतिहार राजनियोग पारान् विज्ञापयति— **भोभो** इत्यादिना । नियोगगौरवेण सम्भ्रमद्योतनार्थं भोभो इति निर्देश । पौरमहत्तरा [1] अद्य पुरीमुच्चावोत्तरा कुरुतेति सम्बन्ध । पुरुहूततनयेत्यादिनागमनस्य महोत्सवरूपत्व प्रकाश्यते । प्रातिकरत्वेनोत्सवत्वारोप । एककस्य प्रातिकरत्वे त्रयाणा युगपदागमनस्य प्रातिकरत्व किं कथ्यतामिति भाव । अत एवानन्दपरवशीकृतत्वोक्ति । महाराजयुधिष्ठिरस्य शासनादित्यलङ्घनीयत्व प्रकाशितम् । उच्चावोत्तरा कुरुत उत्सवावशिष्टा कुरुत । उत्तुवन्ति मिश्रीभवन्त्यस्मिन् जना इत्यधिकरणव्युत्पत्त्योचावशब्दो निपातित । समन्तादलङ्कुरुतेत्यर्थ । तत्र दिङमात्र प्रकाशयति —**कार्येत्यादिना**। पिष्टातकौघै उत्सवेषु हरिद्रातण्डुलकुङ्कुमाद्यवहननकृतैश्चूर्णै पटवासकापरपर्याये वासरश्री दिनप्रभा धूसरा कार्या । दिनश्रीधूमरत्वकथनेन पिष्टातकाना तत्रतत्र विकिरणे बाहुल्य निधीयते । अत एव पिहितरविकरैरित्युक्तम् । पुन धूपै अगुर्वादिसुरभिवस्तुस-

---

१. 'ता! पु क पाठ २ 'त्सवा क पाठ. ३ 'प्रभाप' क पाठ

प्रणयगुरुभिरार्यस्यानुकूलैर्वचोभि-
मर्नसि गलितशेषं रोषमुन्मूलयन्तः ।
सह मुदितमनोभिस्तस्य वृष्णिप्रवीरै-
र्ध्रुवमभिमतयामः खाण्डवप्रस्थयात्राम् ॥ २२ ॥

सात्यकिः — यदाज्ञापयति देवः ।

(इति निष्क्रान्तौ)

इति चतुर्थोऽङ्कः ।

---

णाय श्वो भाविने गमनाय । सन्नाहय सन्नद्धं कारय । वयमपीति अभिमतय इति सम्बन्धः । प्रणयगुरुभिः प्रणयेन याच्ञया स्नेहेन वा गुरुभिः उपादेया अनुकूलैः चित्तस्य साध्यस्य च । आर्यस्य मनसि गलितशेषम् । असंवादेन नात् शेषकल्पनम् । रोषमुन्मूलयन्तः निरवशेषं निरस्यन्तः । वचसां करा यात्राप्रेरणस्यापि रोषोन्मूलनसहभावित्व प्रकाशितम् । अन्यथोन्मूल्येति वत्त मुदितमनोभिर्वृष्णिवीरैः सहेति यात्रायां सहभावः । ध्रुवमिति नात्र इत्यर्थः । तस्य यात्रामभिमतयाम इति प्रतिकूलस्यैव, तदनुसरणनिमित्ता प्रस्थयात्राम् इन्द्रप्रस्थयात्राम् अभिमतयामः अभिमतां कुर्मः । सर्वेशा गन्तव्यमिति बुद्धिं सम्पादयाम इत्यर्थः । इयताभिलापशृङ्गारस्य परिपे सुभद्रापरिणयनावधीतिवृत्तं निर्व्यूढम्[1] ॥ २२ ॥

इति विचारतिलकनाम्नि सुभद्राधनञ्जयव्याख्याने

चतुर्थोऽङ्कः ।

---

१. 'ढम् ॥ (नि' क पाठः.

हद' त्ति। सुदमत्तेण च्चिअ मे पीदी समुप्पण्णा। तिस्से सो वेसपडिग्गहो सोहइ ण व त्ति जाणिअ आअच्छ त्ति। *कहिंणुखु सो कुमारधणञ्जओ, सा अ भट्टिदारिआ वट्टइ। (अग्रतो विलोक्य) एसो अय्यपडिहारओ दुवारे चिट्ठइ। पुच्छिस्सं णं। (उपसृत्य) अय्य! को अज्ज अपुव्वो राअउळवुत्तन्तो।

प्रतिहारकः—अये, नन्दिनिकाऽऽगता। नन्दिनिके! कुमारधनञ्ज नगरबाह्योद्याने मुहूर्तं प्रतीक्ष्य क्षपयति कालम्। भर्तृद रिका पुनः सुभद्रा परिगृहीतगोपालिकावेषा ज्याय

प्रीतिः समुत्पन्ना। तस्याः स वेषप्रतिग्रहः शोभते न वेति ज्ञात्वागच्छेति। कनुख स कुमारधनञ्जयः, सा च भर्तृदारिका वर्तते। एष आर्यप्रतिहारको द्वारे तिष्ठति प्रक्ष्याम्येनम्। आर्य! कोऽद्यापूर्वो राजकुलवृत्तान्तः।

पुनर्दर्शने इति शेषः। अतः स वेषपरिग्रहः शोभते वा न वेति ज्ञात्वागच्छ, तद गमनात् प्रागेवेति शेषः। एवं नियोगमनुष्ठातुमुद्यताह — तत् कनुखलु स कुमा धनञ्जयः, सा च भर्तृदारिका वर्तते। एष आर्यः प्रतिहारकः द्वारे तिष्ठति। प्रक्ष्य म्येनम्। आर्य! कोऽद्यापूर्वो राजकुलवृत्तान्तः। सामान्यकथने विशेषः सेत्स्यती जिज्ञासितमनुक्त्वा तथा प्रश्नः॥

स प्रश्नानुरूपमुत्तरं कथयति। कुमारधनञ्जय इत्यादिनापूर्ववृत्तान्तकथनम् मुहूर्तं प्रतीक्ष्येति, प्रवेशायेति शेषः। क्षपयति कालमिति, प्रवृत्त्यन्तराभावात् तूष्णी मास्त इत्यर्थः। भर्तृदारिका पुनरिति पुन.शब्देन प्रवृत्तिप्रकारं सूचयति। ज्याय

१. 'एत्तिअम' ख पाठ. २. 'हुक्कु' ख. पाठः. ३. 'आ मुद्दा व' ख. ग. पाठ ४. 'तोऽवलो' क. पाठः. ५. 'रोदु' क. पाठः. ६. 'को अपु' क. पाठः. ७. 'व न' क. पाठः.

* 'ता कहिं' इति व्याख्या[illegible] पाठः स्यात्।

(ततः प्रविशति चेटी)

चेटी ---- (क) आणत्तह्मि देवीए जण्णसेणीए, जह---णन्दिणिए! तुवं दाव गदुअ णाहस्स मे इन्दप्पत्थप्पवेससमअं जाणाहि। अण्णं च सुदं मए 'सवत्तीमच्छरावणअणत्थं पडिवण्णगोवालिआवेसेण मं अहिगमिस्सदि बहिणिआ सु-

(क) आज्ञप्तास्मि देव्या याज्ञसेन्या, यथा — नन्दिनिके! त्व तावद् गत्वा नाथस्य मे इन्द्रप्रस्थप्रवेशसमयं जानीहि। अन्यच्च श्रुतं मया सपत्नीमत्सरापनयनार्थं प्रतिपन्नगोपालिकावेषेण मामभिगमिष्यति भगिनी सुभद्रेति। श्रुतमात्रेणैव मे

म्पादितैः बहलपरिमलैः आशामुखानि दूरं दूरावकाशयुक्तं भृशमिति वा, धूम्रीक्रियन्ताम्। तत्रापि दिङ्मुखानां धूम्रीकरणेन धूपानां बाहुल्यम्। तेन तदाश्रयस्य बहलस्य परिमलस्य प्रसारणं बोध्यम्। उच्चैः उन्नतध्वजोपरि निबद्धैः। ध्वजपटपटलैः पताकासञ्चयैः वायुना वितानवदुपरि प्रसारितैः। पावनं मार्गं पवनसम्बन्धिनं, नभ इत्यर्थः। तुच्छीकुरुध्वं पटावरणेन विरलावकाशं कुरुध्वम्। तदर्थं पावनं मार्गमित्युक्तम्। राजवीथ्यो राजमार्गाः पुष्पपूरैः कीर्यन्ताम्। मधुकरशबलैरित्यनेन परिमलबाहुल्येन मधुकरशाबल्यं परिमलः प्रत्यग्रतयेति पुष्पाणां प्रतिनवत्वं विधीयते॥ १॥

अथ सूच्यान्तरसङ्घटनाय चेटीप्रवेशः। सा स्वामिनीनियोगलाभेन कृतार्था भङ्ग्या सूच्यं प्रकाशयति -- आज्ञप्तास्मि देव्या याज्ञसेन्या। आज्ञप्तास्मीति इतः परं किं मम गौरवनिमित्तमिति प्रहर्षः। नियोगप्रकारमनुवदति---यथेत्यादिना। नन्दिनिके! त्वं तावद् गत्वा नाथस्य मे इन्द्रप्रस्थप्रवेशसमयं जानीहि। अथ श्रुतं मया सपत्नीमत्सरापनयनार्थं तस्याः मम चैकभर्तृतालाभात् सापत्न्यं भवेत, तेन मत्सरानुदयार्थमित्यर्थः। प्रतिपन्नगोपालिकारूपेण स्वाभाविकं राजभार्यारूपं परित्यज्याङ्गीकृतेन गोपालिकावेषेण प्राकृतस्त्रीरूपेण। मामभिगमिष्यति भगिनी सुभद्रेति मद्दर्शने वेषान्तरमङ्गीकरणेन बहुमतिः प्रकाशिता भवति। अतो मत्सरस्यावकाशो न भवेदिति भावः। अत एव श्रुतमात्रेणैव श्रवणमात्रेणैव मे प्रीतिः समुत्पन्ना, किं

हद्द' त्ति। सुदमत्तेण च्चिअ मे पीदी समुप्पण्णा। तिस्से सो वेसपडिग्गहो सोहइ ण व त्ति जाणिअ आअच्छ त्ति। *कहिंणुखु सो कुमारधणञ्जओ, सा अ भट्टिदारिआ वट्टइ। (अग्रतो विलोक्य) एसो अय्यपडिहारओ दुवारे चिट्ठइ। पुच्छिस्सं णं। (उपसृत्य) अय्य! को अज्ज अपुव्वो राअउलवुत्तन्तो।

प्रतिहारकः—अये, नन्दिनिकाँगता। नन्दिनिके! कुमारधनञ्जयो नगरबाह्योद्याने मुहूर्तं प्रतीक्ष्य क्षपयति कालम्। भर्तृदारिका पुनः सुभद्रा परिगृहीतगोपालिकावेषा ज्यायसीं

---

प्रीतिः समुत्पन्ना। तस्याः स वेषप्रतिग्रहः शोभते न वेति ज्ञात्वागच्छेति। कनुखलु स कुमारधनञ्जयः, सा च भर्तृदारिका वर्तते। एष आर्यप्रतिहारको द्वारे तिष्ठति। प्रक्ष्याम्येनम्। आर्य! कोऽद्यापूर्वो राजकुलवृत्तान्तः।

---

पुनर्दर्शने इति शेषः। अतः स वेषपरिग्रहः शोभते वा न वेति ज्ञात्वागच्छ, तदागमनात् प्रागेवेति शेषः। एवं नियोगमनुष्ठातुमुद्यताह—तत् कनुखलु स कुमारधनञ्जयः, सा च भर्तृदारिका वर्तते। एष आर्यः प्रतिहारकः द्वारे तिष्ठति। प्रक्ष्याम्येनम्। आर्य! कोऽद्यापूर्वो राजकुलवृत्तान्तः। सामान्यकथने विशेषः सेत्स्यतीति जिज्ञासितमनुक्त्वा तथा प्रश्नः॥

स प्रश्नानुरूपमुत्तरं कथयति। कुमारधनञ्जय इत्यादिनापूर्ववृत्तान्तकथनम्। मुहूर्तं प्रतीक्ष्येति, प्रवेशायेति शेषः। क्षपयति कालमिति, प्रवृत्त्यन्तराभावात् तूष्णीमास्त इत्यर्थः। भर्तृदारिका पुनरिति पुनःशब्देन प्रवृत्तिप्रकारं सूचयति। ज्यायसीं

---

१. 'एत्तिअम' ख पाठ. २. 'हु कु' ख. पाठः. ३. 'आ सुहद्दा व' ख. ग. पाठः. ४. 'तोऽवलो' क. पाठः. ५. 'रो दु' क. पाठः. ६. 'को अपु' क. पाठः. ७. 'का। न' क. पाठः.

* 'ता कहिं' इति व्याख्यानुसारी पाठः, स्यात्।

पाञ्चालराजतनयां प्रणन्तुं प्रतिष्ठमाना प्रविष्टा किलान्तरा नमस्कर्तुमेकानङ्गाया भगवत्या मन्दिरम् । देवश्च पुनर्दामोदरः सम्भृतविविधहरणद्रविणं सङ्कर्षणसनाथं सकलसात्त्वतसमूहमितो गव्यूतिमात्रे सन्निवेश्यागतः साम्प्रतमजातशत्रोर्मन्दिरमध्यास्ते । एषोऽत्र वृत्तान्तः । तदहं प्रारब्धमिममुत्सवं देवाय निवेदयिष्ये । त्वमपि स्वाधिकारमनुतिष्ठ ।

**चेटी** — (क) गच्छदु अय्यो । अहं पि दुग्गामन्दिरं एव्व गच्छामि ।

(निष्क्रान्तौ)

मिश्रविष्कम्भकः ।

---

(क) गच्छत्वार्य । अहमपि दुर्गामन्दिरमेव गच्छामि ।

---

पाञ्चालराजतनयामिति प्रणामयोग्यत्वम् । तदर्थं प्रतिष्ठमानान्तरा एकानङ्गायास्तन्नामधेयाया कात्यायन्या मन्दिर देवीनमस्काराय प्रविष्टा किल । किलेति मया न दृष्टा । एव द्वयो प्रवृत्तिमुक्त्वा भगवत्प्रवृत्तिमाह — देवश्च पुनरित्यादिना । सम्भृतविविधहरणद्रविण विविध मणिहिरण्यादि हरणद्रविण स्त्रीधन "यौतकादिषु यद् देय सुदायो हरण च तद्" इत्युक्त, तत् सम्भृत येन, तादृशम् । सकलसात्त्वतचक्र सङ्कर्षणप्रधानमितो गव्यूतिमात्रे क्रोशयुगप्रमाणे । अध्वनीति शेष । सन्निवेश्य स्थापयित्वा । कालानुसरणार्थमिति सिद्धम् । स्वयमागत अजातशत्रोर्मन्दिरमध्यास्ते । एषोऽत्र वृत्तान्त इति तत्प्रश्नस्योत्तरोपसंहार । तदह प्रारब्धमिममुत्सव महाराजाय निवेदयामि । त्वमपि स्वाधिकारमनुतिष्ठेति तस्य निर्गम , दुर्गामन्दिर गच्छामीति तस्या ॥

---

१ 'ष्णो । न्य श फ प८ .

(ततः प्रविशति धनञ्जयो विदूषकश्च)

धनञ्जयः—(सानन्दम्) अहोतुखल्वारभ्य तीर्थयात्रादिवसादागता क्लेशपरम्परा सेयमनेकानन्दप्रसविनी संवृत्ता। कुतः—

चेतोभूरकरोन्मिलत्कुचतटीं मद्वक्षसा माधवीं
प्रत्यासीदति यज्ञसेनदुहितुर्गाढोपगूढोत्सवः।

---

एव विष्कम्भकेन नायकस्य पुरीप्रवेशोपक्रमे, नायिकाया वेषान्तरपरिग्रहे, अन्तरा देवीगृहप्रवेशे, बलभद्रादिभि सह भगवदागमने च सूचिते अङ्कादौ नायकप्रवेश। नर्मसचिवेन सह प्रविष्ट स सकलसमीहितलाभेन कृतार्थ आत्मन आनन्दहेतूनामहमहमिकयाविर्भावेन तन्निर्देशपूर्वमानन्द समर्थयति—अहोतुखल्वित्यादिना। तीर्थयात्रादिवसादारभ्यागता सेय क्लेशपरम्परा अनेकानन्दप्रसविनी सवृत्तेत्येकवाक्यतया समन्वय। अन्यथा क्लेशपरम्पराया लघूकरण न घटते। दिवसादारभ्येत्यनेनादित एव बन्धुवियोगादिना क्लेशारम्भ प्रकाशित। क्लेशपरम्परा गिरिकान्तारपरिचङ्क्रमणेन, व्रतोपवासादिनैरन्तर्येण, सुभद्रानुरागोत्थाने दुर्लभत्वनिरूपणेन, तस्या एवान्यथाप्रेमेणानुरागस्य द्विशाखतापरिग्रहेण, दिवानिश मदनशरशकलीकृतस्वान्ततया भगवदानुगुण्यसशयनिरूपणेन, वेषान्तरपरिग्रहेण, मन्दानिलमधुकरारावचन्द्रचन्दनादीना रम्यवस्तूनामरम्यतास्फुरणेनासह्यतया, प्रियतमादर्शने नैरन्तर्यविरोधेन चान्यैश्च समागम यावत् क्रमोपचिता देहमन पीडारूपा। सा निरन्तरानुभूता। इय तथैवेदानीं बुद्ध्युपारूढा। अनेकानन्दप्रसविनी अनेकैर्हेतुभिर्भगवद्दर्शनादिभिरानन्दजननी। अथयानन्दस्येवानेकत्व हेतुद्वारकम्। सवृत्तेति, नैतन्निरूपित प्राग्, दैवात् तथा जातेत्यर्थ। क्लेशपरम्पराया दु खावहत्व घटते। सैवानन्दजननीति विस्मय। तद्द्योतकम् अहोतुखल्विति। आनन्दकरत्व विवृणोति—चेतोभूरित्यादिना। चेतोभू सवत्सरावसानादारभ्य सदा सहचरवद् वर्तमान, गुरुजननमस्काराद्युत्सुक दुर्लभा प्रेयसीं प्रति प्रेरयन् वञ्चकत्वेन शङ्कित, पुनरन्यथा निरूपित, पुनर्द्वारका प्रति प्रेरयन्, तदातदा चिन्तासन्तापविषादादिपीडा जनयन्, कदाचित् प्रसादित कदाचिदधिक्षिप्त मरणान्तिकीं

अङ्गं मे सहजैरवाप्स्यति चिरादाश्लेषम्

(निमित्तं सूचयन् सविषादम्) अत्रान्तरे

भूते कष्टमदक्षिणः किमपि मे प्रस्पन्दमानो भुजः ॥ २॥

---

दशां प्रापयन्, तामपि बहुधा श्रमोत्पादनेनोद्बन्धनोद्यमं यावत् पीडयन्, अन्ते माधवीम् अभिजनादिगुणपरिपूर्णाम् । मद्वक्षसा मिलत्कुचतटीमकरोत् । आश्लेषस्य सर्वाङ्गीणत्वेऽपि वक्षःकुचतटयोरेव निरन्तरसंश्लेषो भवतीति तदाश्लेषस्य तत्प्राधान्येन निर्देशः । मिलदिति नैरन्तर्यप्रकाशनम् । चेतोभूरकरोदिति तस्यैवायं प्रभाव इति सूचितम् । आनन्दहेतुषु मुख्यत्वात् प्रथमं सुभद्रासङ्गमनिर्देशः । पुनर्यज्ञसेनदुहितुर्गाढं यदुपगूढम् उपगूहनं, तद्रूप उत्सवः प्रत्यासीदति इदानीमपराह्णे रात्रौ चेति निकटे वर्तते । यज्ञसेनदुहितुरित्यनेन तस्या अयोनिजात्वम्, अत एव रूपचातुर्यं वीर्यलब्धत्वं च प्रकाश्यते । अत एव प्रवासानन्तरसिद्धत्वाच्चोपगूहनस्य गाढत्वमुत्सवरूपत्वं च । अयमप्यानन्दहेतुः । पुनर्मेऽङ्गं सहजैः अर्थाद् वृकोदरादिभिः चिरादाश्लेषं चिरकालप्राप्तम् अत एवात्यानन्दकरम् । अवाप्स्यति, अत्रापि नातिचिरत्वम् । अत्र पूर्वप्रस्तुतं मातृवन्दनं गुरुनमस्कारं चानेकानन्देत्यनेन हृदि निधाय सुभद्राश्लेषप्रस्तावात् सर्वत्राश्लेष एवानन्दकरत्वेनाङ्गीकृतः । सहजैरिति आश्लेषस्य तत्कर्तृकत्वे तेषां स्नेहातिशयः स्फुटीभवेदिति तथा निर्देशः । इत्यनेकानन्दहेतून् भूतभवद्भाविनो निरूप्य हृष्टमना अन्तरा निकटवर्ति व्यसनं सूचयद् वामभुजस्पन्दनं निरूप्य सविषादमाह — अत्रान्तरे सम्पत्परम्परासम्प्राप्त्यवसरे प्रस्पन्दमानोऽदक्षिणो भुजः मे किमपि कष्टं भूते । किमपि अनिरूपितस्वरूपम् । कष्टं कृच्छ्रं, व्यसनमिति यावत् । भूते आप्तवचनवत् परिस्फुटं प्रकाशयति । अत एव स्पन्दनस्य प्रकर्षोऽविच्छिन्नत्वं च । अदक्षिण इति वामस्यानिष्टसूचकत्वात् कष्टमित्युक्तम् । अनवसरेऽनिष्टप्रकाशनादवैदग्ध्यं चादक्षिणपदेन शब्दशक्त्या प्रकाशितम् ॥ २ ॥

---

१. 'दिवा मु' क [illegible] २. '[illegible]' क [illegible]

विदूषकः—(स्वगतम्) (क) जाणिदं मए एदस्स वामभुअपरिप्फन्दस्स फळं, जं मए सन्दणस्सदपरवसेण मग्गे अवहत्थिआ गत्तिआ। तं एदं अत्थहाणिं अणिमित्तं सूएदि। (प्रत्यक्षम्) भो वअस्स! मा विसादं करेहि। किं ण तुए सुदो वाउणा आआसेण अ आरद्धं सरीरं त्ति ळोआअदिआणं सिद्धन्तो। ता केण णिवारीअदि सरीरे वाउपरिप्फन्दो।

(ततः प्रविशति गात्रिकाहस्तो दीर्घाध्वगः)

दीर्घाध्वगः—(सशूत्कारम्) (ख) अहो णिप्फळो मे अद्धगमणपरिस्समो संवुत्तो, जं अदिक्कन्दे वि संवच्छरे वच्छो धण-

(क) ज्ञातं मयैतस्य वामभुजपरिस्पन्दस्य फलं, यद् मया स्यन्दनस्यदपरवशेन मार्गे अपहस्तिता गात्रिका। तामेतामर्थहानिमनिमित्तं सूचयति। भो वयस्य! मा विषादं कुरु। किं न त्वया श्रुतो वायुनाकाशेन चारब्धं शरीरमिति लोकायतिकानां सिद्धान्तः। तत् केन निवार्यते शरीरे वायुपरिस्पन्दः।

(ख) अहो निष्फलो मे अध्वगमनपरिश्रमः संवृत्तः, यदतिक्रान्तेऽपि संवत्सरे वत्सो धनञ्जयो नागच्छति। तच्छीघ्रं गत्वा तस्य प्रवृत्तिं ज्ञात्वागच्छेति महाराज-

तच्छ्रुत्वा नर्मसचिवो निरूपयति—सन्दणस्सदपरवसेण स्यन्दनस्यदपरवशेन। स्यदो वेगः। वाउणा आआसेणेत्यादि। वायुनाकाशेन चारब्धमिति प्रहसनेन शास्त्रविरुद्धाभिधानम्। लोकायतिकपक्षे तु तत्त्वं भूतचतुष्टयम्। "पृथिव्यापस्तथा तेजो वायुरित्येव नापरम्" इति तत्सिद्धान्ते आकाशतत्त्वस्यापरिग्रहात् शास्त्रदेशकालादिविरुद्धं वाचिकं हास्यम्। "यद्यत् प्रहसनं वाक्यं तद्धास्यं वाचिकं स्मृतम्" इत्युक्तत्वात्। एवं भगवदज्जुके शास्त्रसमयं कथयिष्यामीत्युक्त्वा साङ्ख्यप्रक्रियाकथनम्॥

१. 'क—जा' क पाठः

ञ्ञओ ण आअच्छइ। ता सिग्घं गदुअ तस्स पवुत्तिं जाणिअ आअच्छ त्ति महाराअजुहिट्ठिरेण आणत्तेण मए पण्डअजणपदे मळअसिहरे कुमारीतित्थे केरळेसु सज्झपव्वदपब्भाए गोअण्णे अण्णेसु अण्णवतीरतित्थत्थाणेसु अण्णेसिअ अकिदत्थेण मए पविट्ठा दुवारवई। तहिं पि अदक्खिअ अहं णिग्गदो। तहि एव्व मए सुदं इन्दप्पत्थे कुमारधणञ्जओ दट्ठव्वो आसि त्ति। सुदं च मए णअरवाहिरुज्जाणे वत्तदि कुमारो त्ति। ता उवसप्पिस्सं णं। (परिक्रम्योपसृत्य) इदं तं उज्जाणं। जाव पविसामि। (प्रविश्य) जेदु कुमारो।

धनञ्जयः—(विलोक्य) ननु त्वमार्यस्य जङ्घाकारिको वातजवः। किमादाय शासनमागतोऽसि।

दीर्घाध्वगः—(सप्रणामम्) (क) कुमार! महाराअसासणेण कुमारं

---

युधिष्ठिरेणाज्ञप्तेन मया पाण्ड्यजनपदे मलयशिखरे कुमारीतीर्थे केरलेषु सह्यपर्वतप्राग्भागे गोकर्णे अन्येष्वर्णवतीरतीर्थस्थानेषु अन्विष्याकृतार्थेन मया प्रविष्टा द्वारवती। तत्राप्यदृष्ट्वाहं निर्गतः। तत्रैव मया श्रुतम् इन्द्रप्रस्थे कुमारधनञ्जयो द्रष्टव्य आसीदिति। श्रुतं च मया नगरबाह्योद्याने वर्तते कुमार इति। तद् उपसर्पिष्याम्येनम्। इदं तदुद्यानम्। यावत् प्रविशामि। जयतु कुमारः।

(क) कुमार! महाराजशासनेन कुमारमन्वेष्टुं महीमण्डलं परिभ्रमता कुमार-

---

जङ्घाकारिकः जङ्घालध्वरावशेषः। वातजव इति नाम॥

---

१. 'अप' क पाठ २. 'ण्डज' ख पाठ ३. 'वो' ख पाठ ४. 'सज्झदो' क पाठ ५. 'म्बद' क पाठ. ६. 'दोसु' क पाठ ७. 'म्य) इमं उ' ख पाठ.

अण्णेसिदुं महीमण्डळं परिब्भमन्तेणे कुमारणामहेअङ्किदं[1]
गत्तिअं मग्गे दक्खिअ एदं कुमारकेरअं ति चिन्तअन्तेण
मए एसा आणीदा[3]। (विदूषकस्य हस्ते समर्पयति)

**धनञ्जयः**— सखे! कथमपविध्य गात्रिकामियन्तं कालमनाकुलोऽभूः।

**विदूषकः**— (क) तत्तहोदीअं तुए कोवो कादव्वो, जिस्से तुरअवाहणजवेण इअं परिब्भट्ठा।

(नेपथ्ये कलकलानन्तरम्)

कष्टं हा करवालखण्डिततनुं कंसद्विपः सोदरीं
बीभत्सोः सहचारिणीं प्रतिभयः सङ्गृह्य दोर्भ्यामयम्।
खादंखादमगात् खरांशुपदवीं कश्चित् त्रियामाचरः
किं कुर्मः क्षितिगोचरा वयमियं कात्यायनी निर्घृणा॥ ३॥

---

नामधेयाङ्किता गात्रिका मार्गे दृष्ट्वा एषा कुमारसम्बन्धिनीति चिन्तयता मयैषानीता।
(क) तत्रभवत्या त्वया कोपः कर्तव्यः, यस्यास्तुरगवाहनजवेनेयं परिभ्रष्टा।

---

कुमारकेरअमिति तस्येदमित्यर्थे केरअप्रत्ययः॥
अपविध्य त्यक्त्वा॥
तुरगप्रेरणजवेन॥
अत्र प्रकृतरसपरिपोषकत्वेन करुणस्योत्थापनाय चूलिकयानर्थविशेषं सूचयति—कष्टमित्यादिना। करवालखण्डिततनु खादंखादमित्यनेन जीवनप्रत्याशा निरस्ता। बीभत्सोः सहचारिणीमित्यादिना कंसद्विपः सोदरीमित्यनेन च दुष्करकरणसामर्थ्येन निशाचरस्य शक्तिः प्रकाशिता। किं कुर्म इत्यादि द्रष्टॄणां प्रलापवचनम्। कात्यायनी निर्घृणेत्यरक्षणेन भगवतीं प्रत्यधिक्षेपः। अत्र प्रकरणे जीवनप्रत्याशानिवृत्त्या करुणरसः प्रतिपाद्यते॥ ३॥

---

१. 'ण एद कु' क. पाठ. २ 'दा गत्तिआ मग्गे दिण्ण दु' ख पाठः ३. 'दा गत्तिआ' क. पाठः.
४. 'सपो' क. पाठ.

**धनञ्जयः**—(सविषादमाकर्णयन्) हा प्रिये! | (इति मूर्छित पतति)

**विदूषकः**—(सास्रगद्गदम्) (क) हा किदन्तहदअ! एदस्स महिन्दणन्दणस्स भुवणेक्कधणुद्धरस्स वासुहद्दमित्तस्स धम्माणुअस्स अप्पडिआरं विणिवादं दंसअन्तो अज्ज तुवं इस्सरो संवुत्तो। (विचिन्त्य) अहो मे मूडदा, जं एदं अणस्सासअन्तो परिदेविउ पवुत्तो। भो वअस्स! समस्ससिहिसमस्ससिहि।

**दीर्घाध्वगः**—(ख) अहो अच्चाहिदं। णं एसो दाणि पि पडिवुद्धो। हा देव्व! कुमारस्स ईरिसं दसं दंसेदुं तुए अहं एत्थ अज्ज आणीदो।

**विदूषकः**—(ग) हा कहं ण एसो दाणि पि सण्णं पडिवज्जइ। हा वअस्स! आहॅण्डळेण वि अहॅण्डणीयपरक्कमादो जादवसेण्णसमुद्दादो वळक्कारेण अवहरिअ दाणिं रक्खसगोप्फ-

---

(क) हा कृतान्तहतक! एतस्य महेन्द्रनन्दनस्य भुवनैकधनुर्धरस्य वासुभद्रमित्रस्य धर्मानुजस्याप्रतीकारं विनिपातं दर्शयन् अद्य त्वमीश्वरः संवृत्तः। अहो मे मूढता, यदेतमनाश्वासयन् परिदेवयितुं प्रवृत्तः। भो वयस्य! समाश्वसिहि समाश्वसिहि।

(ख) अहो अत्याहितम्। नैष इदानीमपि प्रतिबुद्धः। हा दैव! कुमारस्येदृशीं दशां दर्शयितुं त्वयाहमत्राद्यानीतः।

(ग) हा कथं नैष इदानीमपि संज्ञां प्रतिपद्यते। हा वयस्य! आखण्डलेनाप्यखण्डनीयपराक्रमात् यादवसैन्यसमुद्रात् बलात्कारेणापहृत्येदानीं राक्षसगोष्पदे निम

---

महेन्द्रनन्दनस्येत्यादिनावाक्यनिर्वाहकत्वेन कृतान्तस्येश्वरत्वं स्वातन्त्र्यं प्रकटितम्॥

राक्षसगोष्पद इति। राक्षसस्य तुच्छत्वात् गोष्पदत्वारोपः॥

---

१ 'भुव' क पाठ. २ 'ब' ग पाठ. ३ 'ब' ख पाठ. ४ 'अस्सास' ग पाठ. ५ ... क पाठ. ६ 'आ' ग पाठ. ७ 'दा' ख पाठ. ८ 'ण' ख पाठ.

दे णिमज्जन्तिं माहविं कहं उवेक्खसि । भो वादजव! कहं[1] तुमं अम्बाए कुन्तीएं[2] भादूणं जण्णसेणीए अ एदस्स[3] एदं दसं अणिवेदिअ चिट्ठसि । हा अम्ब कुन्ति ! दक्खंदक्ख[4] दे पिअतणअस्स अज्जुणस्स अपुव्वं आआरळङ्घणं, जं चिरकाळादो आसादिअ अकिदपादवन्दणो एव्व परळोअजत्तं पडिवज्जइ ।

**दीर्घाध्वगः**--- (क) सुट्ठु अय्यो भणादि । कदाइ सोदराणं साण्णिहाणादो एदस्स पडिबोधो भवे । हा अहं एत्तिएण काळेण उवगदो एदस्स दुज्जादस्स णिवेदओ संवुत्तो । (रुदन् निष्क्रान्तः)

**विदूषकः**--- (ख) किं दाणिं मए उवक्कन्दं, जं परळोअजत्ताहिमुहं अणणुगच्छन्तो चिट्ठामि । अहव एसा दाव गत्तिआ तिस्से अङ्गसंसग्गसुहआ एदस्स बहुसो सन्दावहारिणी

---

ज्जन्तीं माधवीं कथमुपेक्षसे । भो वातजव ! कथं त्वमम्बायाः कुन्त्याः भ्रातॄणां याज्ञसेन्याश्चैतस्यैतां दशामनिवेद्य तिष्ठसि । हा अम्ब कुन्ति ! पश्यपश्य ते प्रियतनयस्यार्जुनस्यापूर्वमाचारलङ्घनं, यच्चिरकालादासाद्याकृतपादवन्दन एव परलोकयात्रां प्रतिपद्यते ।

(क) सुष्ठु आर्यो भणति । कदाचित् सोदराणां सन्निधानादेतस्य प्रतिबोधो भवेत् । हा अहमेतावता कालेनोपगत एतस्य दुर्जातस्य निवेदकः संवृत्तः ।

(ख) किमिदानीं मयोपक्रान्त, यत् परलोकयात्राभिमुखमननुगच्छन् तिष्ठामि । अथवैषा तावद् गात्रिका तस्या अङ्गसंसर्गसुभगा एतस्य बहुशः सन्तापहा-

---

१. 'हं अ' क. पाठः २. 'ए जण्णसेणीए अ भादूण एद' क. पाठः. ३. 'स्स द' ख. पाठः ४. 'क्ख दे' ख. ग. पाठः.

दिट्ठा। ता कदाइ मोहं वि अवणेइ । परिक्खिअ एदं पच्छा मे पाणा परिच्चाइदव्वा। (गात्रिकां तस्योरसि ददाति)

**धनञ्जयः**--- (सहसा समाश्वस्य सहर्षमालिङ्गन्) अयि सुन्दरि! कथं प्रतिनिवृत्तासि। (पुनर्विलोक्य सविषादम्) कथमियं गात्रिका। (सबाष्पम्) अयि गात्रिके! किमिति तामेकाकिनीं प्राणेश्वरीं गच्छन्तीमनुगच्छन्तं मां रुणत्सि। (ऊर्ध्वमवलोक्याश्रूणि मुञ्चन् बद्धाञ्जलि.)

पुरमुपगतां तात! प्रेम्णा पुरन्दर! माधवीं
मम सहचरीमुत्सङ्गे त्वं निधाय वधूं तव।
व्यपगतशुचं शच्या तावद् विधेहि सहाम्बया
विघटिततनुर्यावत् प्राणैरुपैमि तवान्तिकम्॥ ४॥

---

रिणी दृष्टा । तत् कदाचिद् मोहमप्यपनयति । परीक्ष्यैतत् पश्चान्मे प्राणाः परित्यक्तव्याः ।

---

कथं प्रतिनिवृत्तेति । गात्रिकास्पर्शे प्रियाप्रतीत्या सुन्दरि! इत्यामन्त्रणम्। पुनर्गात्रिकाबुद्ध्या तां प्रति सविषादमाह। एकाकिनीं प्राणेश्वरीमित्यनुगमनयोग्यत्वम्। अत एव किमिति रुणत्सीति रोधस्यानुपपत्तिः। प्राणेश्वरीं गच्छन्तीमित्युक्तौ गन्तव्यदेशं निरूप्य स्वर्गम्य स्वतः प्राप्त्या तद्गमने कृत्यं तातं प्रार्थयति — पुरमुपगतामित्यादिना। प्रेम्णा स्नेहेन। अत्र हेतुः — माधवीं मम सहचरीमिति। अत एवोत्सङ्गे कृत्वेत्यादरप्रार्थनम्। विशेषतस्तव वधूमिति ममत्वपोषणम्। तावत् तदवधि व्यपगतशुचं विधेहि। सहाम्बयेति स्त्रीणामनुसरणचातुर्यात्तौकव्यपनयनसौकर्यं प्रकाशितम्। यावत् प्राणैर्विघटिततनुः विश्लेषितशरीरः। उपैमीति इदानीमेवेति शेषः॥ ४॥

---

१. '[illegible]' ख. पाठ. २. '[illegible]' क. पाठः. ३. '[illegible]' ख. पाठः.

**विदूषकः** --- (सहर्षं स्वगतम्) (क) दिट्ठिआ मम भोअहेअसेसेण एसो पडिबुद्धो। ता जह ण पुणो वि मोहं पडिवज्जइ, तह उवक्कमिस्सं। (प्रत्यक्षम्) भो वअस्स! को दे ववसाओ, जं तुह बाहुबळाअत्तसव्वपुरुसत्थं जेट्ठं दे जुहिट्ठिरं जणणिं अण्णं च भादुवग्गं अणवेक्खिअ जीविअणिरवेक्खं उवक्कमसि।

**धनञ्जयः** --- वयस्य! परित्यक्तजीवलोकसुखस्य जनस्य का नाम बन्धुष्वपेक्षा। (सकरुणम्) मातः! कुन्तिभोजतनये! अद्यप्रभृत्यर्जुनगतमपत्यवात्सल्यमन्येषु चतुर्षु पुत्रेषु संविभजस्व। अपिच ---

लक्ष्मीर्धर्मसुते सुयोधनकरादाच्छिद्य न स्थापिता
न क्षोणी चतुरर्णवोर्मिरशना तस्यैकपत्नी कृता।
मूर्धानो धरणीभृतां न गमितास्तत्पादपीठस्थलीं
कुक्षावम्ब! पृथे! वृथैव विजयः कृच्छ्रादुपोढस्त्वया ॥५॥

(क) दिष्ट्या मम भागधेयशेषेणैष प्रतिबुद्ध। तद्यथा न पुनरपि मोह प्रतिपद्यते, तथोपक्रमिष्ये। भो वयस्य! कस्ते व्यवसाय, यत् तव बाहुबलायत्तसर्वपुरुषार्थं ज्येष्ठं ते युधिष्ठिरं जननीमन्यं च भ्रातृवर्गमनपेक्ष्य जीवितनिरपेक्षमुपक्रमसे।

दिष्ट्या मम भागधेयशेषेणैष प्रतिबुद्ध। पूर्वं प्रबोधेऽपि नराश्येनेदानीं प्रबोधमात्रस्य हर्षहेतुत्वम् ॥

लक्ष्मीरित्यादि। लक्ष्मीरित्यादिना आत्मनो वात्सल्याविषयत्व साधयति। अत्र साम्राज्यप्रापणरूप एक एवार्थस्तच्छेषाणां व्यापाराणामघटनेन प्रतिपाद्यते। लक्ष्मी साम्राज्यलक्ष्मी। धर्मसुते अभिजनादिसकलगुणसामर्थ्येण साम्राज्यलक्ष्मीपतित्वयोग्ये। सुयोधनकरात्, सुयोधनशब्देन लक्ष्मीसम्बन्धायोग्यत्वोदाच्छेदने सौकर्यं, करादित्यनेन लक्ष्मीकार्याणां करशुल्कादीनां तदधीनत्व च प्रकाशितम्।

१. 'भगवस् रा. पाठ २ त्वम्, शी' क पाठ

**विदूषकः**—(क) भो इदं दाव कहेहि । उभअलोअसुहप्पच्चूहो अप्पपरिच्चाओ त्ति एदं पि किं तुह मए आचिक्खीअदि।

---

(क) भो इद तावत् कथय । उभयलोकसुखप्रत्यूह आत्मपरित्याग इत्येतदपि किं तव मया आख्यायते ।

---

आच्छिद्य हठादपहृत्य। तस्य तद्योग्यत्वात् तथोक्तिः। स्थापिता, अत्र स्वप्रभुत्वेनैव साम्राज्यस्वीकरणे धर्मराजस्य शक्तिरस्त्येव, भ्रातॄणामस्माकं तन्महोदयसाधनमेव जन्मफलमिति सर्वत्र प्रयोजकत्वमुक्तम्। इति साम्राज्यसम्पादनशेषतयैकांशं प्रतिपाद्य पुनरंशान्तरमाह—क्षोणी चतुरर्णवोर्मिरशना चतुःसमुद्रपर्यन्तेत्यर्थः। पत्नीत्वशेषतयोर्मीणां रशनात्वारोपः। माण्डलिकेभ्यः सर्वेभ्यः स्वनियन्तृ(क)त्वसमर्पणेन स्वीकृत्य सर्वत्र तदाज्ञावशंवदत्वसम्पादनमेकपत्नीकरणम्। पुनस्तच्छेषतया धरणीभृताम् अरिमित्रमध्यस्थोदासीनानां मूर्धानः अनन्यशरणतया सम्राड्वन्दनं प्रति प्रवणाः सन्निहितपादपीठस्पर्शनमपि मुख्यमिति तत्पतिताः न कारिताः। अत एव धरणीभृच्छब्दोऽपि तेषु प्रवर्तते, अन्यथा सम्राज एव तथोक्तिरिति प्रकाश्यते। अत्रैकसाध्य[3]शेषतया बहूनां व्यापाराणामकृतत्वकथनेन एषु यद्येकोऽंशो निर्व्यूढस्तर्हि जन्मनो वृथात्वं न जातं, तदभावात् कुक्षौ भरासहिष्णुतया कृच्छ्रेण वहनस्य वैयर्थ्यम्। अम्बेति वीरप्रसूरहं भूयासमिति त्वादृशीनामाशंसा। पृथे! इति प्रथितगुणविशिष्टे, न त्वद्दोषोऽत्र शङ्कनीयः। मन्दभाग्यस्य ममैकस्यैव दोषः। विजय इति ममैकस्यैव भरणे वैयर्थ्यम्, अन्येषां गुणगौरवेण श्लाघ्यजन्मत्वात्। किञ्चैवं स्थिते विजय इति नामापि वैयर्थ्येन हास्यकथ्यां विगाहते। पृथैवेत्यवधारणेनोक्तेष्वनुक्तेष्वपि कर्तव्येषु लेशम्याप्यकरणाद् वैराग्यातिशयः प्रकाश्यते ॥ ५ ॥

भो इदं तावत् कथय। उभयलोकसुखप्रत्यूह आत्मपरित्याग इत्येतदपि तव मया भणितव्यम्। एतदपीति शास्त्रोक्तमपि। तव विदुषः। मया मूढेनाख्यायते। इत एतत् स्वबुद्ध्यैव ज्ञात्वात्मपरित्यागो न कर्तव्य इत्यर्थः। प्रत्यूहो विघ्नहेतुः ॥

---

१. 'भो वअस्स! इ' इति ग. पाठः. २. 'इहलोअ' क. पाठः. ३. 'विषयत्र' क. पाठः.

धनञ्जयः — सखे ! सत्यमेवैतत् । न पुनरमी मया परित्यज्यन्ते प्राणाः । तथाहि —

गत्वा पदानि कतिचित् परिवर्तितास्यं
क्षिप्तस्तया हृदि ममाद्य कटाक्षपाशः ।
आबध्य तेन सुदृढं परिकृष्यमाणाः
प्राणाः सखे ! परवशाः खलु निष्पतन्ति ॥ ६ ॥

---

सत्यमेतदिति त्वयोक्तमिति शेष । न पुनरिति, परित्यागे आत्मन कर्तृताया दोष. । अन्यकर्तृके प्राणहरणे किं क्रियताम् । तत् प्रतिपादयति — गत्वेत्यादिना । अत्र करुणपरिपोषे स्मर्यमाणा शृङ्गारवृत्तान्तास्तत्पोषका एव भवन्तीति लक्षणानुसारेण प्रियतमाकटाक्षपातवर्णनम् । तया मदर्थं परित्यक्तनिखिलबन्धुवर्गया वीरधर्मानुसारिण्या गमनेऽपि सहकारिण्या प्राणवल्लभया मद्विश्लेषमसहमानयापि भगिनीसम्भावनार्थमित कथञ्चित् प्रस्थितया । कतिचित् पदानि गत्वा गमनेऽनिच्छया मृदुले पदकमले मन्दमन्द कतिचिद् द्वित्राणि पदानि न्यस्येत्यर्थ । परिवर्तितास्य तदानीमेवेतोमुख व्यावर्तितमुग्धमुखपुण्डरीकम् । मम हृदि कटाक्षपाशो न्यस्त । क्रियाविशेषणत्वेन व्यावर्तनस्यानन्यपरत्व प्रकाशितम् । न तु परिवर्तितास्ययेति । अन्यत्र गमनोपक्रमे विश्लेषासहिष्णुतया कर्तव्य निरूप्याहो विस्मृतमितिवद् व्यावर्तितमुखकमल कटाक्षपाशो न्यस्त । देहस्यापि व्यावर्तने गमनविरोधो भवेदित्यास्यस्यैव व्यावर्तनमुभयसाध्याविरोधार्थम् । हृदीत्यनेन कटाक्षस्य सर्वाङ्गीणत्वेऽपि निजभावबोधनार्थं प्रयुक्तत्वात् त्वद्विश्लेषमसहमानयापि मयावश्यकर्तव्यतया गमनसाहस क्रियते, मनस्तु मा नानुसरति, त्वय्येव विश्राम्यतीत्यादि निजप्रेमभारानुगुण भावसर्वस्व बोधयितु कटाक्षपात । तच्च बोधन हृदय प्रति भवति । तच्च सर्वं मया हृदयेनाङ्गीकृतमिति हृदीत्युक्तम् । मसृणमुग्धस्निग्धप्रेमप्रवाहवाहिन कटाक्षस्य पाशत्वारोपण बन्धनसाधनत्वेन । अद्येति अनतीतकालत्वेन बन्धनस्याशैथिल्य प्रकाश्यते । अत एव सुदृढमाबध्येत्युक्तम् । तेन

---

१. 'मी त' क पाठ

**विदूषकः**---(स्वगतम्) (क) ण दाव एसो बन्धुजणसिणेहेण वा अण्णेण वा केण वि संपदं पकिदिं णेदव्वो भवे। ण उण एआरिसा रिपुजणतिरक्खारक्खमिणो होन्ति। ता एदस्स मणम्मि मणा संरम्भं ओदरइस्सं। (प्रत्यक्षम) भो वअस्स! ण खु एत्थ तेळ्ळोक्के सोअपारवस्सादो अळङ्घणीओ अ-ण्णो अत्थि भावो, जेण परवसीकिदो तुमं वि णाम दइआपाणावहार[1]परुसस्स पावरक्खसस्स पडिआरं अणा-अरन्तो परिदेविउं[2] पउत्तो।

(क) न तावदेष बन्धुजनस्नेहेन वान्येन वा केनापि साम्प्रत प्रकृतिं नेतव्यो भवेत्। न पुनरेतादृशा रिपुजनतिरस्कारक्षमिणो भवन्ति। तदेतस्य मनसि *मनाक् संरम्भमवतारयिष्यामि*। भो वयस्य! न खल्वत्र त्रैलोक्ये शोकपार-वश्यादलङ्घनीयोऽन्योऽस्ति भाव., येन परवशीकृतस्त्वमपि नाम दयिताप्राणा-पहारपरुषस्य पापराक्षमस्य प्रतीकारमनाचरन् परिदेवयितु प्रवृत्तः।

कटाक्षपाशेन आ समन्ताद् बद्ध्वा। बन्धेऽपि शैथिल्य चेद् व्याप्त्या न फलमिति सुदृढमित्युक्तम्। यथा विश्लेषो न भवति तथेत्यर्थ। अत्र हृदि कटाक्षपाशक्षेपः, प्राणानां बद्ध्वाकर्षणमिति वैषम्यं हृदयप्राणयोराश्रयाश्रयिभावेन न स्फुरति। "उर कण्ठचरो बुद्धिहृदयेन्द्रियचित्तधृत्" इति प्राणस्य हृदयधारकत्वोक्त्या हृद-यक्षोभः प्राणेषु भवति प्राणक्षोभो हृदये चेति प्राणाः परिक्षुभ्यमाणा इत्युक्तम्। सखे! इति मद्रूपस्यसहायभूते त्वयि किं न कथ्यते। परवशाः खलु, न स्वतन्त्राः। अत एव न परित्यज्यन्त इत्युक्तम्। अत्र कटाक्षपाशं हृदये न्यस्य बद्ध्वाकर्षण प्रति तस्याः कर्तृतया विमुच्य गन्तुं न शक्तिः, गमनमवश्यकर्तव्यं च, तत् सह नेष्यामीति बुद्ध्येवेत्युत्प्रेक्षा प्रकाश्यते ॥ ६ ॥

अत एतस्य मनसि मनाक् संरम्भमवतारयिष्यामि। शोकपारवश्यादलङ्घ-नीयः अशमनीयः। भावः मनोविकारः। त्वमपि नाम वीराग्रेसरः। दयिताप्राणा-

१. 'रिणोपा' ख. पाठ. २. 'अपरो सन्न' ख. पाठ.

धनञ्जयः — (ससम्भ्रममुत्तिष्ठन्) आः, किं नाम कृतागस्स्वरिप्वप्रतिकुर्वन्नास्ते धनञ्जयः। (ऊर्ध्वमवलोक्य) भोभोः पिशिताशनापशद! मत्प्राणवल्लभाप्राणापहारिन्! क्व गत्वा मद्बाणपातं परिहरसि।

यमः शरणमस्तु चेत् तव नृशंस! दिव्याशुगैः
पुरत्रयमिव क्षणात् पुररिपुः स्फुरत्पावकैः।
प्ररुष्टभुजगेश्वरप्रतिमचापटङ्कारिभि-
स्त्वया सह न किं यमं यमपुरं च मश्नाम्यहम् ॥ ७ ॥

पहारपरुषस्य राक्षसस्य, किमतःपर पारुष्यम्। प्रतीकारमकुर्वन् तत्प्राणापहरणलक्षणां प्रतिक्रियामकुर्वन्। परिदेवितुं * शक्तिहीनप्राकृतजनवत् प्रलपितुं प्रवृत्तः। अनेन शोकपारवश्यस्य दुर्निवारत्वं मया कल्प्यते। तत् प्राकृतजनोचितं परिदेवनं परित्यज्य प्रियतमाप्राणापहारिणो राक्षसस्य प्राणानादातु यतस्वेत्यभिप्रायः ॥

आः कृतागस्स्वित्यादि संरम्भेणाहङ्कारगर्भं वचनम्। अत एव धनञ्जय इति परोक्त्योक्तिः। कृतागस्सु, न क्रियमाणागस्सु। अपराधे कृतेऽपि तदुचितां प्रतिक्रियामकुर्वन्नास्ते कथम्। नैतद्धनञ्जयसदृशं, तद् धनञ्जयत्वोचितमाचरामीति आः दुरात्मन्नित्युपक्रमः। मत्प्राणवल्लभाप्राणापहारिन्! किमतःपरमनिष्टाचरणम्। अतः मद्बाणपातं क्व गत्वा परिहरसि देहस्य मद्बाणलक्ष्यत्वं कुत्राच्छाद्य परिहरासि, न कुत्रापीत्यर्थः। अत्र सर्वेषां निग्रहेण यमपुरप्रापणं साध्यम्। तदहं यममेव पूर्वं शरणं प्रपद्य इति तद्बुद्धिं परिकल्प्य कथयति — यमः शरणमित्यादि। तव यमः शरणं चेद् अहं पूर्वमेव यमं शरणं संश्रयामीति बुद्धिश्चेत्। अस्तु तदप्यस्तु। तथापि मत्साध्यस्य न क्षतिरित्याह — दिव्याशुगैः त्वया सह यमं यमपुरं चाहं क्षणात् किं न मश्नामि मश्नाम्येवेत्यर्थः। तत्र निश्चयानुगुणं दृष्टान्तमाह — पुररिपुः पुरत्रयमिवेति। प्ररुष्टभुजगेश्वरप्रतिमस्य चापस्य टङ्कारिभिः ज्यास्वनयुक्तैः स्फुरत्पावकैः (यदि[1] दिव्याशुगैः) इति सायकगौरवेण साध्यस्य पौष्कल्यं प्रकाशितम्। अत एव त्वया सह यमं यमपुरं चेत्युक्तम् ॥ ७ ॥

१. '(न) किं' क पाठः.

* बाहुलको णिजभावः स्यात्।

अथवा मत्प्राणनाथां सोदर्यामात्मनः शरणागतां राक्षसादरक्षन्ती चण्डिका मम दास्यति। धनुर्धनुः।

(ततः प्रविशति द्रौपदीनेपथ्यधारिणी कात्यायनी गोपालिकावेषधारिणी सुभद्रा च)

**कात्यायनी** — अहोतुखल्वचिन्तनीयोऽयमर्जुनस्य प्रभावः, यदमुष्य संरम्भो ममापि प्रक्षोभयति हृदयं, यद्भयादहं गृहीतयाज्ञसेनीरूपा प्राप्तवती।

---

इत्यध्यवसाये पुनर्विमृश्याह—अथवेत्यादि। किमनेन राक्षसान्वेषणप्रयासेनेत्यर्थः। चण्डिका मम दास्यतीति। अनुसरणेन प्रातिकूल्येनापीयमेवापेक्षणीया। मत्प्राणनाथां नित्य भगवतीपादसेविनो मम प्राणवल्लभामिति रक्षणीयत्वे प्रथमहेतुः। आत्मनः सोदर्यां निजावरजाम्। अनेनैव वासुदेवभगिनीमिति च स्फुरति। तत्रापि न दूरस्थां, शरणागतां निजगृहं प्राप्ताम्, इयं मां रक्षतीति शरणत्वेन प्राप्तां च। राक्षसात् स्वसंहननयोग्यात्। अरक्षन्ती शक्यत्वे सत्यरक्षणात् सापराधा। मम दास्यतीति, अथापि वीरधर्मेणाशक्तावपि देहं तदुपहारीकरिष्यामीति धनुर्धनुरित्युक्तम्। सर्वथा कारुण्येन दातुमेवौचित्यम्। तत्कारुण्ये राक्षसस्य हरणमप्यन्यथा भवेदिति दास्यतीत्युक्तम्॥

एवं तस्य संरम्भेण धनुरादानोपक्रमे प्रियतमां दातुं द्रौपदीवेषेण भगवत्याः प्रवेशः प्रतिपाद्यते — अहोतुखल्वित्यादि। अहोतुखल्वित्याश्चर्ये। तन्निमित्तं प्रकाशयति — अचिन्तनीयोऽयमिति। अचिन्तनीयः गौरवेण मनसा निरूपयितुमपि न शक्यः। प्रभावः प्रतापः। यदिति। अमुष्य संरम्भः प्रभावनिमित्तः। ममापि स्वाक्षभूताया अपि। किञ्च, अमुष्य संरम्भो मयि न कार्यकर इति जानत्या अपि गौरवेण झटिति प्रक्षोभयति। यद्भयाद्, मां मन्यमानो कुपितस्तत्स्वरूपप्रकाशने किमपि वैषम्य भवेदिति भीत्या वेषान्तरमवलम्बितवतीत्यर्थः॥

---

१. '[illegible]' मूलकोशयोः पाठः.

**सुभद्रा**—(भयं रूपयन्ती) (क) अम्मो, एदं भअवदिं मम बहिणिअं कच्चाआणिं अणुगच्छन्तीए अय्यउत्तसमीवं उवसप्पन्तीए मम पुरदो विअ सो दुट्ठकुणवासणो।

**कात्यायनी**—(उपसृत्य) (ख) जेदु णाहो। णाह! उवसंहरीअदु एसो संरम्भो। एसा दे सहअरी भअवदीए एआणङ्गाए

(क) अम्मो, एतां भगवतीं मम भगिनिकां कात्यायनीमनुगच्छन्त्या आर्यपुत्रसमीपमुपसर्पन्त्या मम पुरत इव स दुष्टकुणपाशनः।

(ख) जयतु नाथः। नाथ! उपसंह्रियतामेष संरम्भः। एषा ते सहचरी भग-

**अम्मो** इत्यादि। स्वतो भीतत्वात् तदानीमेव भयहेतोरनुभूतत्वाच्च भयं रूपयन्ती नयनभ्रमणवेपथुविषादादिभिर्भावयन्ती भयकारणं प्रति स्वयमेव निरूपयति। अम्मो इत्यावेगद्योतकमव्ययम्। भयाभावनिमित्तगौरवेऽप्यतीतस्य भयहेतोः प्रत्यक्षवत् स्फुरणादावेगः। एतां भगवतीं मम भगिनिकां कात्यायनीमनुगच्छन्त्या आर्यपुत्रसमीपमुपसर्पन्त्या मम पुरत इव स दुष्टकुणपाशनः। एनां पुरो दृश्यमानाम्। भगवतीं वीर्यातिशयवतीम्। "भगः श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु" इत्युक्तत्वाद् भगोऽत्र वीर्यवाचकः। वीर्यातिशये सत्यपि ताटस्थ्यं चेन्न फलम्। तथाच न। मम भगिनिकां ज्येष्ठामतिकारुण्यवतीम्। पुनश्च कात्यायनीं शुभाशुभकर्मफलप्रदाम्। अत एव दुष्टे प्रतिकूलामस्मास्वनुकूलां च.

"कृतं शुभाशुभं कर्म कात्यं तत्फलमुच्यते।
तस्यायनं प्रदात्रीयं तस्मात् कात्यायनी स्मृता॥"

इत्युक्तत्वात्। तदनुगमने भयस्य न प्रसङ्गः। पुनश्चार्यपुत्रसमीपं वीराग्रेसरस्य विपक्षकुलकालस्य मम प्रियतमस्य समीपमुपसर्पन्त्या लेशतोऽपि भयस्यानौचित्ये सतीत्यर्थः। स दुष्टकुणपाशनः, स इत्यपहरणप्रकारं निरूप्योक्तिः, अत एव दुष्ट इति, कुणपाशन इति तस्य मायाकलेबरचर्वणं दृष्टमनुसृत्योक्तिः। पुरत इव इदानीमप्यग्रे वर्तत इवेति भयातिशयप्रकाशनम्॥

**जयतु नाथ** इति वेषानुगुण्येन भर्तारं प्रति, भगवतीरूपेण क्षत्रकुमारं प्रति साधारण्येनोक्तिः। एषा ते सहचरी भगवत्या एकानङ्गयाक्षतशरीरा मम हस्ते दत्तेति

अक्खदसरीरा मम हत्थे दिण्णा। पडिच्छ णं ।

**सुभद्रा**— (क) जेदु अय्यउत्तो।

**धनञ्जयः**—(सहर्षं सविस्मयं च स्वगतम्) यदिनाम सत्यमेवैषा माधवी, ममैव मन्ये चरितफलं जन्म। किन्तु दयितया द्रौपद्या अस्यां प्रत्यानीतायां का नामात्र प्रतिपत्तिः। (पर्याकुलस्तिष्ठति)

**विदूषकः**—(जनान्तिकम्) (ख) भो! पच्चक्खं एव्व तुज्झ पाणवळ्हाओ देवीओ दक्खिअ कहं पडिवत्तिमूढो विअ चिट्ठसि।

---

वस्या एकानङ्गयाक्षतशरीरा मम हस्ते दत्ता। प्रतीच्छैनाम्।

(क) जयत्वार्यपुत्रः।

(ख) भोः प्रत्यक्षमेव तव प्राणवल्लभे देव्यौ दृष्ट्वा कथं प्रतिपत्तिमूढ इव तिष्ठसि।

---

द्रौपदीरूपेण कथनम्। भगवत्याः एकानङ्गायाः मम हस्ते दत्ता रक्षिता। प्रतीच्छैनामिति परमार्थः। एकानङ्गेति तत्र स्थानाभिमानिन्या देवताया विशेषनाम॥

यदिनामेत्यादि। अत्यन्तनाशस्य पूर्वं श्रुतत्वादिदानीं दर्शनाच्च विकल्पः। सत्यमेव, पूर्वं श्रुतं मिथ्या एषा दृश्यमाना माधवीति वस्तुवृत्तं यदि, ममैव जन्म चरितफलं, नान्येषाम्। ईदृशस्य दुर्लभस्य महोदयस्य लाभाद् ममैव जन्मनः साफल्यं, मम जन्म सफलमेवेति च भवेत्। तत्र वैषम्यं निरूपयति—किन्त्विति। दयितया द्रौपद्या प्रियतमया अभिजनादिगुणविशिष्टया संवत्सराधिकविप्रवासानन्तरप्राप्तया तस्यां प्रत्यानीतायाम्। का नामात्र प्रतिपत्तिः प्रेमसौजन्ययोरुचिता प्रवृत्तिः। प्रवासानन्तरदर्शनेन तस्याः प्रथमं सम्माननीयत्वं, व्यसनानन्तरप्राप्त्या माधव्याः प्रागेवाश्वासनीयत्वं, द्वयोर्युगपत् प्राप्तौ किं क्रियतामिति पर्याकुलत्वम्॥

तत्रानौचित्यं निरूप्य नर्मसचिव आह—प्रत्यक्षमेव तव प्राणवल्लभे दृष्ट्वा कथं प्रतिपत्तिमूढ इवेत्यनेन चतुराग्रेसरस्य तवैतदनुसरणे मौढ्यं नास्ति, उतापवृत्त्या प्रतिपत्तिमूढत्वं संभाव्यत इतीवशब्दः। तिष्ठसीति प्रासकालमतिलङ्घ्य कालान्तरे प्रवृत्तिर्न शोभते। क्षुधि समुत्पन्नायां कालान्तरभुक्तिर्न तृप्तिकरीति॥

धनञ्जयः — सखे ! सत्यमेवैषा याज्ञसेनी, इयं च सुभद्रैव । तथाप्यहमसुलभत्वादीदृशानां भागधेयानां न श्रद्दधे ।

विदूषकः — (क) भो ! मा खु अइन्तिदोवणदं अब्भुदअं अणिमित्तेण सन्देहेण विणासेहि ।

सुभद्रा — (सरोष स्वगतम्) (ख) कीस दाणि अय्यउत्तो कहं पि काळहत्थादो परिब्भट्ठाअं अदिट्ठपुव्वाअं विअ इत्थिआअं मइ उदासीणो विअ चिट्ठइ ।

(क) भो [1] मा खल्वचिन्तितोपनतमभ्युदयमनिमित्तेन सन्देहेन विनाशय ।

(ख) कस्मादिदानीमार्यपुत्र कथमपि कालहस्तात् परिभ्रष्टायामदृष्टपूर्वायामिव स्त्रिया मयि उदासीन इव तिष्ठति ।

तदुक्तिमनूद्याह — सत्यमेवेत्यादि । तत्रात्मनो दाक्षिण्यनिर्वाहवैषम्यमाच्छाद्योक्ति एषा याज्ञसेनी, इय च सुभद्रैव यद्यपीति । कथमनयोर्युगपदागमन, कथ विपन्नेति श्रुता दृश्यत इति सशयस्य स्थानमस्ति । एतदवलोकने निरूपण दशाया सशयो निवृत्त । तथाप्यह न श्रद्दधे एवमेतयोरागमन न विश्वसिमि । ईदृशाना भागधेयानाम् । "खादखादामि" (श्लो ३)त्यनेनात्यन्तनाश एव श्रुत । सेदानीमक्षतशरीरा माता, इमा मह्य दातु पाञ्चाली निर्मत्सरा युगपत् समीप प्राप्ते त्येतद् भागधेय लभ्यमेव । तस्यासुलभत्वमाशङ्क्य सहसा मनसो न विश्वासो जात इति समुदाचारविलम्बने निमित्तम् ॥

दाक्षिण्यलक्षणेन नायकस्य यथापुर प्रेमदृष्टिपातादिकमनालक्ष्य नायिका "प्रकृष्टस्य प्रेम्ण स्खलितमविषह्य हि भवती"ति युक्त्यनुसारेण ताटस्थ्यमसहमाना प्रेमकोपेन नयनकुवलयोपान्तयोरीषदारुण्य भ्रुवोरीषद्भङ्गुरत्व चानुभावरूपमवलम्ब्यमाना विमृशति — कस्मादिति । अत्र निमित्त न जानामि । इदानीं, पूर्व कदाचिदप्येव न दृष्टम् । किञ्च, इदानीं कारुण्यातिशयस्य योग्यत्वे । आर्यपुत्र विश्वसनीयनिखिलगुणपात्रभूत । कथमपि दैववशात् । कालहस्तात् परिभ्रष्टाया, न तु

१ अ इ' क ख पाठ

**विदूषकः**--- (सुभद्रामवलोक्य जनान्तिकम्) (क) भो वअस्स! एसा दाव तत्तहोदी सुहद्दा भङ्गुरेण भूविक्खेवेण आअमेण दिट्ठिपादेण अंतग्गअं अमरिसं पिसुणेइ। तुवं पुण णट्ठसन्देहो[1] वि कीस चिरदिट्ठाअं पाञ्चाळीअं इमाअं च अन्तअपुरादो आअदाअं विअ उदासीणो विअ चिट्ठसि।

**धनञ्जयः**--- सत्यमपगतः सन्देहः। तथापि--

नास्यामाश्वासवाचः सपदि शिथिलितप्राणसन्देहवृत्तौ
वर्तन्ते रुद्धमार्गाः स्वसरि मधुरिपोर्द्रौपदीसन्निधानात्।
शक्येते वक्षसा मे न च कुचकलशौ मण्डलीकर्तुमेतौ
पाञ्चाल्या विप्रवासव्यसनपरिगतौ माधवीसन्निधानात्॥८॥

---

(क) भो वयस्य! एषा तावत् तत्रभवती सुभद्रा भङ्गुरेण भ्रूविक्षेपेणायामेन दृष्टिपातेनान्तर्गतममर्षं पिशुनयति। त्वं पुनर्नष्टसन्देहोऽपि कस्माच्चिरदृष्टायां पाञ्चाल्यामस्यां चान्तकपुरादागतायामिवोदासीन इव तिष्ठसि।

---

व्यसनं प्राप्तायामित्येव, मृतप्रत्यागतायामिव। मयि आत्मार्थे निरस्तसमस्तबन्धुजनायाम् अनन्यापेक्षायामनुपदमागतायाम्। उदासीन इव अनास्थावानिव तिष्ठति। अनास्थाप्रकर्षे दृष्टान्तमाह --- अदृष्टपूर्वायां, पूर्वं कदाचिदप्यदृष्टायाम् अपरिचितायामित्यर्थः। स्त्रियां यस्यांकस्याञ्चिदनपेक्षिताज्ञातविशेषायां दृष्टिमात्रगोचरायां यथौदासीन्यं भवति, तथा। उदासीन इवेति पूर्वावस्थानिरूपणे न निश्चयः, इदानीमवस्थया सम्भाव्यत इतीवशब्दः। अत एव कस्मादिति हेतुं प्रति वितर्कः॥

तादृशीं तस्या अवस्थामवलोक्य तद्बोधनपूर्वमधिक्षेपगर्भं नर्मसचिवस्योक्तिः॥

तस्याधिक्षेपवचनं श्रुत्वा पूर्वप्रस्तुतं सन्देहं निरस्य निगूढं दाक्षिण्यानिर्वेदपवैषम्यं प्रकाशयति --- तथापीत्यादिना। अस्यां पुरोवर्तमानायाम् आश्वासनयोग्यायाम्। यतः शिथिलितप्राणसन्देहवृत्तौ मधुरिपोः स्वसरि, आभ्यां विशेष-

---

१. 'हो वी' क. ख. पाठः.

(प्रत्यक्षम्) प्रिये! पाञ्चालि! परमनुगृहीतोऽहं भगवत्या कात्या-

---

गम्या स्वरूपतोऽनस्थाविशेषाचादरणीयत्व प्रकाशितम्। प्राणाना सन्देहवृत्तिः इदानीं गच्छन्ति वा न वेति। शिथिलिता प्राणसन्देहवृत्तिर्यस्या। अत एवाश्वासौचित्यम्। आश्वासवाच "प्रिये! कथ त्व हताशेनापहृतासि। अत पर मा विना पदमपि न गन्तव्यम्। सम्भ्रम परित्यज। त्वद्वियोगेन मया जीवन्मरणदु खमनुभूतमि"त्यादय। हृदि स्फुरिताना वाचा बहुत्वेन वाच इत्युक्तम्। सपदि इदानीमेव व्यसनापगमानन्तरम्। न वर्तन्त इति खेद। वर्तन्ते प्रवर्तन्ते। धातुगर्भित एवार्थ उपसर्गेणोन्मील्यते, प्रकरणादिना तत्सिद्धौ किमुपसर्गेणेति वर्तन्ते इत्येवोक्तम्। एवमौचित्यज्ञाने वाचा हृदि स्फुरणे च कथमप्रवृत्तिरित्यत्र हेतुमाह—द्रौपदीसन्निधानाद् रुद्धमार्गा। द्रौपदीशब्देन कुलोन्नति वीर्यशुल्कता प्रथमपरिग्रहश्च प्रकाश्यते। अत एव तत्सन्निधानस्य रोधहेतुत्वम्। प्रथमभार्याया तस्या स्थितायां कथमन्यस्या अनुवर्तन घटत इति शङ्कया रोधनम्। रुद्धमार्गा इत्यनेन वाचा प्रसरणारम्भो जात। वैखरीशक्तिसङ्क्रान्तो निरोध। तत एव परबोधन शक्यम्। तादृशस्य निर्गमस्याभावात् स्फुरणमपि न कार्यकरम्। अत एव न प्रवर्तन्त इत्युक्तम्। बुद्धौ स्फुरति, तेन किं फलमिति भाव। तर्हि द्रौपदीं प्रति विप्रवासानन्तरसमुचितमनुष्ठेयमित्यत्र वैषम्यमाह—पाञ्चाल्या एतौ कुचकलशौ मे वक्षसा मण्डलीकर्तुं न शक्येते च। वैषम्यमुभयत्र दत्तपदमिति चशब्देन द्योतितम्। आत्मवक्षस करणत्वेन समुखीनयो कुचकलशयो कर्मत्वेनाश्लेषाभिरचिर्व्यज्यते। अत एव मण्डलीकर्तुमित्याश्लेषगाढत्वप्रकाशनम्। अत्युन्नतयोर्गाढयो कुचकलशयोरुरसा निपीडनेऽपि मण्डलीकरणमेव शक्यमिति कुचयो सौभाग्यातिशय प्रकाश्यते। अत्राश्लेषस्य प्रथममौचित्यमिति तत्कथनम्। विप्रवासव्यसनपरिगतौ विप्रवासकृतस्य व्यसनस्य परिगतौ प्राप्तौ सत्याम्, आवयोरिति शेष। अपीत्यर्थात् सिद्धम्। अथवोपचारेण कुचयोर्विशेषण वा। एव स्थिते कथ मण्डलीकर्तुं न शक्यौ क्रियेते, अत्र हेतुमाह—माधवीसन्निधानादिति। नवोढाया कुलपालिकाया सन्निधानमत्र हेतु। अत्रोभयो सन्निधानमुभे प्रति समुचितस्याकरणे निमित्तमित्यनेन नायकस्य दक्षिणत्व स्फुटीकृतम्॥ ८॥ एवमनुसरणवैषम्य निरूप्योभयाविरोधेन वचनचातुर्यं प्रकाशयति—'प्रिये!' इत्यादिना। प्रेमसर्वस्वप्रकाशकेन प्रिये! इति

यन्या, यया त्वमहं च प्राणदानादस्या अमुष्माद् व्यसनार्णवादुत्तारितौ स्वः।

**सुभद्रा** — (स्वगतम्) (क) दिट्ठिआ ण मइ उदासीणदाए एरिसो अय्यउत्तो। एदं भअवइं सच्चं एव्व अय्यां दोवइं उप्पेक्खिअ दक्खिणदाए तुह्णीओ संवुत्तो। मए उण एदं भअवइं एव्व चिन्तअन्तीए कुविदं। जइ णाम जोग्गे अय्य-

---

(क) दिष्ट्या न मय्युदासीनतयेदृश आर्यपुत्रः। एतां भगवतीं सत्यमेवार्यां द्रौपदीमुत्प्रेक्ष्य दक्षिणतया तूष्णीकः संवृत्तः। मया पुनरेतां भगवतीमेव चिन्तयन्त्या कुपितम्। यदिनाम योग्ये आर्यपुत्रो बहुमानसङ्कटे पतितः। यद्येतं

---

सम्बोधनेन तस्याः प्रथममावर्जनं कृतम्। तच्छेपतया पाञ्चालीत्यभिजन्मपुरस्कारेण स्तुतिः। परमनुगृहीतोऽहं भगवत्या कात्यायन्या,"कात्यायन्या मम हस्ते दत्ते"ति तदुक्तिमनुसृत्योक्तिः। परमनुगृहीतः। इतः परं न कोऽप्यनुग्रहः। त्वमहं च प्राणदानादस्या अमुष्माद् व्यसनार्णवादुत्तारितौ स्वः। मयीह स्थिते त्वद्दर्शनं प्रति प्रतिपालनमसहमाना मदुक्तिलेशमवलम्ब्य त्वद्दर्शनाय धावन्ती मध्ये विपन्नेति श्रुते तवैव प्रथमं व्यसनं, पश्चान्ममेति त्वमहं चेत्युक्तम्। प्राणदानाद् अपगतानां प्राणानां पुनरानीय दानाद्, न तु रक्षणमात्रात्। अमुष्माद् व्यसनार्णवात् प्राणापगमनिश्चयकृताद् व्यसनसमुद्राद् उत्तारितौ। ययेति तद्विशेषणत्वेऽपि तस्यार्थस्य हेतुत्वं सिद्धम्। अनेन त्वद्विपत्तिशङ्कयागाधे व्यसन एव निमग्ना वयम्, इदानीं त्वज्जीवनलाभात् कथञ्चिद् निवृत्तव्यसना इति तदावर्जनं प्राधान्येन व्यज्यते। अत एवास्या इति सप्रेमकटाक्षपातनिर्देशः॥

दिष्ट्या न मय्युदासीनतयेदृश आर्यपुत्रः। एतां भगवतीं सत्यमेवार्यां द्रौपदीमुत्प्रेक्ष्य निरूप्य। दक्षिणतया उभयोः समानवृत्तित्वरूपया। तूष्णीकः संवृत्तः निरपेक्षवन् स्थितः। मया पुनरेतां भगवतीमेव चिन्तयन्त्या कुपितं विस्मृतद्रौपदीवेषपरिग्रहया कुपितं कोपायारब्धं, न तु कोपः स्फुटीकृतः। यदि

उत्तो बहुमाणसङ्कडे पडिओ । जइ एदं पडि[3] कुप्पिस्सं, अवस्सं अदिळहूई होमि ।

(तत. प्रविशति सन्नाप्पा द्रौपदी चेटी च)

द्रौपदी — (क) हळा णन्दिणिए! ताअं[2] वासुभद्दभहिणिआअं मम चित्ताराहणत्थं पडिवण्णगोवाळिआवेसाअं पच्छिमं दसं पडिवण्णाअं ण खणं पि जीविअं धारइस्सं। जइ धेरइ[3] संपदं णाहो, तं दट्ठूण किदत्था मरिस्सं। ता आदेसेहि णअरबाहिरुज्जाणस्स मग्गं।

प्रति कोपिष्यामि, अवश्यमतिलघ्वी भवामि।

(क) सखि नन्दिनिके[1] तस्या वासुभद्रभगिन्या मम चित्ताराधनार्थं प्रतिपन्नगोपालिकावेषाया पश्चिमा दशा प्रतिपन्नाया न क्षणमपि जीवित धारयिष्यामि । यदि धरति साम्प्रत नाथ, त दृष्ट्वा कृतार्था मरिष्यामि । तदादेशय नगरबाह्योद्यानस्य मार्गम् ।

नामार्यपुत्र इति अन्यथा न करोतीत्यर्थ । योग्ये बहुमानसङ्कटे बहुमानरूपे सङ्कटे पतित । कर्तव्याकरणेन वैषम्यस्फुरणाद् बहुमानस्य सङ्कटावहत्व, सङ्कटरूपत्व वा। यदिनामेति सिद्धपक्षपरिग्रहे, न तु विकल्पे। योग्ये बहुमानसङ्कटे पतित इति सिद्धम्। एव स्थिते यद्येत प्रति उचितज्ञमुचितकारिण प्रति कोपमाविष्करिष्यामि, अवश्य नूनं लघ्वी भवामि न्यूना भवामि, निमियमस्थाने कुपितेति लघूकरणयोग्या भवामि । नास्य किमपि लाघवमिति भाव ॥

**ताअं** वासुभद्दभहिणिआअमित्यादि । वासुभद्रभगिन्या स्वतो गौरवयुक्तायामपि । मम चित्ताराधनार्थं विनयप्रकाशनेन मम चित्तपरितोषणार्थम् । आराधनफल हि परितोष इति तथोक्तम्। प्रतिपन्नगोपालिकावेषायाम् अङ्गीकृतप्राकृतस्त्रीवेषायाम् । धरति म्रियते अवतिष्ठते जीवतीत्यर्थ ॥

१ 'दिणि' क ख' पाठ २ 'अ म' क रा पाठ ३ 'धा' ग पाठ

**चेटी** — (सास्रगद्गदम्) (क) भट्टिणि! ण दाव अहं णन्दिणिआ, जा एदस्स मरणपरिणामस्स दुक्खस्स एक्कं काळणं संवुत्ता। एदुएदु भट्टिणी।

(शोकालस परिक्रामतः)

**चेटी** — (अग्रतो विलोक्य सहर्षम्) (ख) भट्टिणि! मा मा सन्तप्प। एसा भट्टिदारिआ माहवी कुमारस्स समीवे चिट्ठइ[1]।

**द्रौपदी** — (दृष्ट्वा सहर्षं सविस्मय च) (ग) हळा! किण्णुखु[2] सच्चं एव्व एदं भवे।

**चेटी** — (पुनर्विलोक्य सविस्मयम्) (घ) अम्मो, अवरं अच्छरिअं। कहं एत्थ गच्छन्ती भट्टिणी कुमारस्स समीवे लक्खीअदि[3]। किं विअ एदं।

**द्रौपदी** — (ङ) हं[4] भअवं। (परवशा तिष्ठति)

**चेटी** — (च) भट्टिणि! मा भाआहि। णं कुमारो चिट्ठइ। उवसप्पिअ जाणह्म।

**द्रौपदी** — (छ) हळा, सच्चं एदं। तह वि परमत्थं अआणन्ती पय्याउळा होमि। (शङ्किता समुपसर्पति)

---

(क) भट्टिनि! न तावदह नन्दिनिका, या एतस्य मरणपरिणामस्य दुःखस्य एकं कारणं संवृत्ता। एत्वेतु भट्टिनी।

(ख) भट्टिनि! मा मा सन्तप। एषा भर्तृदारिका माधवी कुमारस्य समीपे तिष्ठति।

(ग) सखि! किंनुखलु सत्यमेवैतद् भवेत्।

(घ) अम्मो, अपरम् आश्चर्यम्। कथमत्र गच्छन्ती भट्टिनी कुमारस्य समीपे लक्ष्यते। किमिवैतत्।

(ङ) हं भगवन्।

(च) भट्टिनि! मा बिभीहि। ननु कुमारस्तिष्ठति। उपसर्प्य जानीवः।

(छ) सखि! सत्यमेतत्। तथापि परमार्थमजानती पर्याकुला भवामि।

---

१. 'ल्क्खीअदि' ग पाठः. २. 'णु एद सच भ' घ. पाठ. ३ 'दीसइ' ग. पाठ., ४. 'ह प' ग. पाठ..

**सुभद्रा** — (स्वगतम्) (क) अम्मो, परिवत्तिअरूवाए भअवदीए स-[२]रिसरूवा का वि इत्थिआ आअच्छइ। तक्केमि अय्या जण्णसेणि त्ति। जइ दाव उवआरं पडिवज्जिस्सं, एदाए भअवदीए रहस्सभेदो भवे। ता काळं पडिक्खिस्सं।

**विदूषकः** — (विलोक्य सभयम्) (ख) भो वअस्स! परित्ताआहिपरि-त्ताआहि। रक्खसमअं[३] इदं उज्जाणं संवुत्तं। किं ण पेक्खसि पडिदिसं आअच्छन्तीओ पञ्चाळीओ। अवस्सं माआए इमाए होदव्वं।

**धनञ्जयः** — सखे! मा भैषीः। ननु सम्प्रधार्य निर्णेष्यावः।

**कात्यायनी** — (स्वगतम्) अये, विफलयन्ती मम रूपपरिवृत्तिमागता पाञ्चाली।

**द्रौपदी** — (ग) जेदु णाहो।

**चेटी** — (घ) जेदु कुमारो।

**विदूषकः** — (ङ) भो! किं तुएँ संपहारिअं का एत्थ परमत्था दोव्वइ त्ति।

---

(क) अम्मो, परिवर्तितरूपाया भगवत्याः सदृशरूपा कापि स्त्री आगच्छति। तर्कयाम्यार्या याज्ञसेनीति। यदि तावद् उपचारं प्रतिपत्स्ये, एतस्या भगवत्या रहस्यभेदो भवेत्। तत् कालं प्रतीक्षिष्ये।

(ख) भो वयस्य! परित्रायस्वपरित्रायस्व। राक्षसमयमिदमुद्यानं संवृत्तम्। किं न पश्यसि प्रतिदिशमागच्छन्तीः पाञ्चालीः। अवश्यं मायायानया भवितव्यम्।

(ग) जयतु नाथः।

(घ) जयतु कुमारः।

(ङ) भोः! किं त्वया सम्प्रधारितं कात्र परमार्थो द्रौपदीति।

---

१. 'म्रा—अ' क. ख. पाठ. २. 'दि' क. पाठ. ३. 'प। दि' क पाठ. ४. 'ए अचहा' क. पाठ.

**धनञ्जयः** — (सवितर्कम्) सखे! द्वितीयामिमां द्रौपदीं मयि प्रेमगर्भं पतन् पिशुनयति परमार्थो दृष्टिपातः। प्रथमया च पुनरौदासीन्यमाचरन्त्या मायाविन्या भवितव्यम्। तदियमनुशासनीया। (सक्रोधम्) अनार्ये! का त्वमेवमनार्यमाचरसि।

**कात्यायनी** — (द्रौपदीवेषमपनयन्ती) वत्स!

किरीटिन्! मा स्म कुप्यस्त्वं सहजां मे कनीयसीम्।
आर्याहमागता दातुमेनां ते सहचारिणीम्॥९॥

(सर्वे सम्भ्रम नाटयन्ति)

---

द्वितीयामिमामित्यादि। वेषसाम्येऽपि नयनाभ्यां भाव आविष्क्रियते, यत प्रेमगर्भं संवत्सरान्तरितदर्शनौत्सुक्यपुरस्सरप्रेमनिर्भरं, पतन् विवशमस्मद्गात्रेषु वर्तमान. दृष्टिपात। पातस्य पतन न घटत इति पतन्नित्यनेन प्रसरणमेवोक्तम्। औदासीन्यमाचरन्त्या तटस्थजनवद् वर्तमानयेति मायाविनीत्वनिश्चये लिङ्गम्। अनार्यमाचरसीति। अनार्यम् असम्मतम् इति क्रियाविशेषणम्। आचरसि अस्मत्सन्निधौ मायाकृत वेषभाषादिकं प्रकाशयासि॥

तदानीं भगवत्या भक्तानुग्रहाय स्वविग्रहप्रकाशनेनोक्तिः—**वत्स! किरीटि-न्नित्यादि**। पुत्रवद् वात्सल्येन कोपेऽपि कारुण्यपूर्णाभ्यां नेत्राभ्यां स्मितपूर्वमवलोक्य वत्स! किरीटिन्निति सादर सम्बोधनम्। मा स्म कुप्यः तव कोपस्य नायं काल॰। का त्वमित्यस्योत्तरमाह—आर्याहमिति। अनार्ये! इत्यधिक्षेपवचनं हृदि निधायार्थान्तरेणाक्षिपति, आर्येति मम नाम। तदज्ञानात् त्वयान्यथोक्तम्। तत्र ममादर एव। किमर्थमागमनमित्यत्राह—सहजामित्यादि। मे॰कनीयसीं सहजामिति स्नेहपात्रत्व प्रकाशितम्। ते सहचारिणीमिति तव धर्मपत्नीम्। उभयमपि वात्सल्यहेतु॰। अत एव दातुमागता। "चण्डिका मम दास्यती"ति पूर्वोक्तमनुसृत्योक्तिः। राक्षसेनापहृतामपि त्वं मे दयिता देहीति तव तटस्थवृत्त्यानशासनमनष्ठातमागते॰त्यर्थः॥ ९॥

**विदूषकः** —(क) भो! मम दाणिं संसओ इअं पि माए त्ति।

**धनञ्जयः** —(सप्रमोदम्) सखे! मैवं वादीः। ब्रुवते मे रोमाङ्कुरदन्तुरितानि परमार्था भगवतीममून्यङ्गानि। (सवयस्य प्रणमन् बद्धाञ्जलि)

अङ्घ्रिभ्यामम्ब! पीठीकृतमहिषशिरोमण्डलाभ्याममूभ्या-
मष्टाभ्यः श्लिष्टमौर्वीवलयझणझणानिक्कणेभ्यो भुजेभ्यः।
कोटीरेभ्यश्च पश्चात्कृतकलमशिखाविभ्रमेभ्यो नमस्ते
मूर्छन्मुग्धेन्दुलेखाकुटिलतनुगलच्चन्द्रिकाशेखरेभ्यः॥१०॥

अपिच मया यदज्ञानादयुक्तमभिहितं तदम्बया क्षन्तव्यम्। (पादयो पतति)

(क) भो! मम इदानीं सशय इयमपि मायेति।

अङ्घ्रिभ्यामित्यादि भक्तिप्रहर्षपारवश्यपुरस्सर व्यवहार । अङ्घ्रिभ्या परमयोगिभि समाधिचक्षुषा कथमपि साक्षात्करणीयाभ्याम् उभयलोकसिद्धिमार्गाभ्यामिवाभ्या भाग्योदयेनास्मन्नयनगोचराभ्याम्। नम , इदानीमेवाहङ्कारपरित्यागेनात्रात्मानमर्पयामीत्यर्थ । पीठीकृतमहिषशिरोमण्डलाभ्या महार्घरत्नपीठप्रतिष्ठापनयोग्यत्वेऽपि दुष्टनिग्रहार्थमाविर्भावाद् विकृतवेषस्य महिषासुरस्य कठिनाशुचिशिरोमण्डलपीठीकरणमपि शोभतेतरामिति तथोक्ति । पुन क्रमेण अष्टाभ्यो भुजेभ्यो नम । श्लिष्टेत्यादि । श्लिष्टानाम् आकर्षणास्फालनादिषु सम्मिलिताना मौर्वीवलयाना झणझणानिक्कणस्तत्कालभावी येषु । पीठीकृतेत्यत्र समरसमस्तावात् तत्कालविशेषणत्वेनोक्ति । पुन कोटीरेभ्यश्च जटाकलापेभ्यश्च नम । चशब्देनादिमध्यान्तपरिग्रहेऽनुसन्धानयोग्याना श्रीमदवयवविशेषाणा परिग्रह सूचित ।(पश्चादित्यादि)। कलमशिखाना कलमकणिशाना विभ्रम सस्थानकान्त्यादिरूप पश्चात्कृत स्वगौरवेण न्यक्कृतो य । मूर्छदित्यादि । अत्र मुग्धेन्दुशेखरेभ्य इति वक्तव्ये लेखाकुटिलतनुशब्दयोर्निर्देशस्य कष्टकल्पनया प्रयोजन निरूप्यते । कोटीराणा बहुत्वाद् बन्धन विना शैथिल्ये इन्दुरेखाया शेखरत्व सर्वत्र न व्याप्नोति। अत एव मुग्धेन्दुरेखाया कुटिलेन कौटिल्येन तनु अल्पाल्प गलन्त्वी, ऋजुताय। गलन-

**कात्यायनी** — (तमुत्थाप्य) वत्स! धनञ्जय! मा पर्याकुलो भूः।

अपिच,

भद्रः सौभद्रस्ते भूयात् तनयः समस्त्वया धनुषि।
आशां जय विजय! त्वं जहि सुरपरिपन्थिनः सर्वान्॥ ११॥

**धनञ्जयः**—अनुगृहीतोऽस्मि।

---

स्यानल्पत्वं भवेत्, कौटिल्ये वक्रभागेभ्योऽल्पाल्पं गलन्ती पुनर्गलितानामंशानां परस्परसम्मेलनेन मूर्छन्ती वर्धमाना सकलकोटीरव्याप्तिपर्याप्ता चन्द्रिका शेखरत्वेन वर्तते येषामिति। मुग्धशब्देन हृद्यत्वमेवोक्तम्॥ १०॥ अयुक्तमभिहितम् "अनार्ये" इत्यादिकथनम्। अम्बयेति पुत्रचापलस्य मात्रा क्षन्तव्यत्वात्॥

**मा पर्याकुल** इति। अयुक्तकथनादिशङ्कया व्याकुलत्वं मा कृथाः। अपिचेत्यादि। एतद्दानमात्रेणैव मम नालंभावः, पुनरप्यनुग्रहं करोमीत्यर्थः। भद्र इत्यादि। भूयात् तनय इति। एतत्परिणयनस्य मुख्यं फलमिदमिति तदेव प्रथमं दास्यामि। भद्रः कल्याणः, सन्ततिसंस्थापनं पुत्रोत्पत्तौ परमप्रयोजनमिति तत्सम्पादकत्वमङ्गीकृत्य भद्र इत्युक्तम्। सकललोकोपकारस्य कुलस्य सन्तानहेतुत्वात् कल्याणरूप इत्याह। धनुषि त्वया समः। क्षत्रधर्मेषु शस्त्राजीवायाः प्राथम्यम्। "शस्त्रेणाजीवनं राज्ञो भूतानां चाभिरक्षणमि"त्युक्तत्वाद् धनुषीत्युक्तम्। त्वया सम इति। उपमानान्तरस्य तुच्छत्वात् त्वयेत्युक्तम्। गुणान्तरोपलक्षणमेतत्। सौभद्र इति। सुभद्रायामेक इति तन्मुखप्रेक्षणेनाशिषः साधारण्यं प्रकाशितम्। आशां जयेति अनन्तरभाविनीमवस्थां हृदि निधाय उत्तराशां गर्भीकृत्योक्तिः। विजय! इति। किमत्राशीर्विषयत्वं, गुणानुबद्धमेव नाम त्वयि पूर्वसिद्धमिति भावः। आशामिति इन्द्रियजये प्रथमापेक्षणीयमाशाविजयं प्रत्युक्तिः, "आशा हि परमं दुःखं नैराश्यं परमं सुखमि"त्युक्तत्वात्। आशारागरोपादिदूषितां शेमुषीं गुरूपदेशविचारादिना निर्मलीकृत्यात्मसाक्षात्कारेण संसारं निरस्य भगवद्गीतानुसारेण प्रशान्तखेदो वीरधर्मे स्थिरो भवेत्ययमर्थोऽपि गर्भीकृतः। अत एव जहि सुरपरिपन्थिनः सर्वानित्युक्तम्। सुरपरिपन्थिनः न केवलं मानुषपरिपन्थिनः, नृपादिरूपेण भूमौ वर्तमानान् पातालगतान् स्वर्गगतान् असुरान् राक्षसांश्च निगृहाणेति सर्वानित्युक्तम्॥ ११॥

**द्रौपदी** — (क) भअवइ ! वन्दामि । (पादयोः पतति)

**कात्यायनी** —(उत्थाप्य) भद्रे ! पाञ्चालि ! पञ्चभ्यस्ते पतिभ्यः पञ्च तनयानप्रतिरथानवाप्नुहि । अपिच यदपायशङ्कया त्वया व्यवसितमत्याहितं, सेयं ते भगिनी प्रतिगृह्यताम् । (सुभद्रां दर्शयति)

**द्रौपदी** — (ख) अणुग्गहिदह्मि ।

**सुभद्रा** —(स्वगतम्) (ग) हद्धि, मण्णिमित्तं किदो अय्याए मरण-ववसाओ । (प्रकाशम्) अय्ये ! वन्दामि ।

**द्रौपदी** —(घ) भत्तुणो दे अविरहिआ होहि । एहि, आलिङ्गेहि मं। (आलिङ्गति)

**सुभद्रा** — (स्वगतम्) (ङ) इअं मे सिणेहेण अम्बा देवई ।

**धनञ्जयः** — (सप्रणामम्) भगवति ! अमुष्य नो व्यसननिपात-स्य याथातथ्यमवगन्तुमिच्छामि ।

**कात्यायनी** — वत्स ! श्रूयताम् । पुरा खलु दुर्योधनः परिणेतु-मिच्छन्निमां माधवीं वासुभद्रभयाद् गूढमलम्बुसेन रक्षसा भूतरूपधरेण समाजीहरत् । तदा त्वयैव परित्राता ।

**धनञ्जयः** — (स्मृत्वा) एवमेतत् । ततस्ततः ।

---

(क) भगवति ! वन्दे ।

(ख) अनुगृहीतास्मि ।

(ग) हा धिक्, मन्निमित्त कृत आर्यया मरणव्यवसाय । आर्ये ! वन्दे ।

(घ) भर्तुस्ते अविरहिता भव । एहि, आलिङ्ग माम् ।

(ङ) इय मे स्नेहेनाम्बा देवकी ।

---

अप्रतिरथानिति । वीरप्रसूना पुत्रोत्पत्तावियदेवापेक्षणीयमिति भाव. ॥

**कात्यायनी** — अद्यापि पुनस्तेनैव दुरात्मना तस्यैव नियोगात् प्रदर्शितमायाकलेवरेण नीयमाना मया परिरक्षिता ।

**धनञ्जयः** — परमनुगृहीतोऽस्मि ।

**कात्यायनी** — (निचिन्त्य) वत्स ! आर्यो वासुभद्रः सह धर्मभरुत्तनयाभ्यां भवन्तमभ्येति । तदहं साधयामि । (निष्क्रान्ता)

**धनञ्जयः** — (पाञ्चालीमवलोक्य) देवि ! तव खलु सौहृदय्येन माधव्याः प्रत्यानीताः प्राणाः ।

**द्रौपदी** — (क) णाह ! मा खु एव्वं। मम भग्गसेसेण एसा आणीदा । (स्मृत्वा) णाह ! इदाणिं एव्व किळ जादवा आअच्छन्ति , तेसं सम्माणणत्थं मए गन्तव्वं ।

**धनञ्जयः** — देवि ! अनुरूपमभिहितम्। गम्यतां तावत्। अहमप्यनुपदमागत एव ।

(द्रौपदी प्रणम्य निष्क्रान्ता चेट्या सह)

**विदूषकः** — (ख) दिट्ठिआ अवअदग्गाहा दाणिं सेरगोट्ठीवाहिणी। सेरं[1] अवगाहीअदु अत्तभवं। भो सव्वआळदुळ्ळळिओ

---

(क) नाथ! मा खल्वेवं, मम भाग्यशेषेणैषानीता । नाथ! इदानीमेव किल यादवा आगच्छन्ति, तेषां सम्माननार्थं मया गन्तव्यम् ।

(ख) दिष्ट्यापगतग्राहेदानीं स्वैरगोष्ठीवाहिनी । स्वैरमवगाह्यतामत्रभवान् । भोः !

---

**सौहृदय्येन** सुहृदयत्वेन आत्मशुद्ध्या । शुद्धात्मनां दुःखानुभवस्यापात्त्वात् दुःखानुदयायात्मशुद्ध्यै तस्या जीवनमिति भावः ॥

तां गुणकथामसहमानाह — **मम भाग्यशेषेणेति** । न सौहृदय्येनेत्यर्थः ॥

**स्वैरगोष्ठीवाहिनी** स्वैरगोष्ठीरूपा नदी । स्वैरगोष्ठी प्रियतमया सह से-

---

१. 'र गा' क. पाठ..

दे सिणेहो, जं पुव्वं एदाए विवत्तिं सुणिअ मुच्छाए पाणसंसए पडिओ[1], दिट्ठाअं पुण एदाअं आणन्दपरवसो चिट्ठसि।

**सुभद्रा**—(स्वगतम्) (क) हं, अधण्णाए[2] मम किदे मुच्छिदो अय्यउत्तो।

**धनञ्जयः**—प्रिये! इदानीमस्मद्रक्षसः पूर्यतामभिलाषः। (आलिङ्गति)

**विदूषकः**—(ख) भोदि! किं णिरवसेसं रक्खसेण भक्खिदा छप्पदिआ, जेण एआरिसे पमोदआळे वि ण आअदा।

**सुभद्रा**—(ग) मुक्ख! मा अकळ्ळाणं भणाहि। सा खु तवस्सिणी अवराओ सहीओ आणेदुं जादवसिविरं पत्थिआ।

**विदूषकः**—(घ) भो वअस्स! एसा दाव गत्तिआ णो भण्डा-

---

सर्वकालदुर्ललितस्ते स्नेह, यत् पूर्वमेतस्या विपत्तिं श्रुत्वा मूर्छया प्राणसंशये पतित, दृष्टाया पुनरेतस्यामानन्दपरवशस्तिष्ठसि।

(क) हम्, अधन्याया मम कृते मूर्छित आर्यपुत्र।

(ख) भवति! किं निरवशेष राक्षसेन भक्षिता षट्पदिका, येनैतादृशे प्रमोदकालेऽपि नागता।

(ग) मूर्ख! माकल्याण भण। सा खलु तपस्विनी अपरा सखीरानेतु यादवशिबिर प्रस्थिता।

(घ) भो वयस्य! एषा तावद् गात्रिका नो भाण्डागार प्रवेश्यताम्। अथवात्रभ-

---

रालापादि। तद्विरुद्धत्वादन्यस्या ग्राहत्वाध्यवसाय। दुर्ललित दुर्वृत्त, देश-कालानपेक्षीत्यर्थ। पूर्वमस्या विपत्तिं श्रुत्वा मूर्छया प्राणसंशये पतित इति तस्य विरहदुःखप्रकाशनेन "अधन्याया मम कृते मूर्छित आर्यपुत्र" इति नायिकावचनेन च तत्प्रेमपरिपोषहेतुत्वात् करुणस्य शृङ्गाराङ्गत्व स्फुटीकृतम्॥

---

१. 'ओ, पुणो दिट्ठाअ ए' क पाठ, 'आ अत्तभव। दि' ग पाठ २ 'हं' क पाठ

आरं पवेसीअदु । अहव अत्तहोदीए थणसिहरं आरोवीअदु[1]। मए दाव असुरक्खो एसो भारो।

धनञ्जयः[2]—सखे! सम्यगनुप्रबोधितोऽस्मि। सोऽहमस्या मत्प्राणदायिन्याः प्रत्युपकरोमि । (गात्रिकां तस्याः स्तनयोर्बध्नाति)

(ततः प्रविशति वासुदेवो युधिष्ठिरो भीमश्च)

वासुदेवः—(सानन्दम्)

रत्नालङ्कारमिश्रं हरणमुपहृतं
पादपद्मौ पृथायाः
प्राप्तौ मूर्ध्ना प्रयातं सकलमफलतां
कर्म दुर्योधनस्य ।
निःशेषामृष्टरोषः सह मधुनिवहै-
रागतः सीरपाणि-
र्धर्मः साक्षात्कृतोऽसाविह सह सहजैः
साम्प्रतं निर्वृतोऽस्मि ॥ १२ ॥

वत्याः स्तनशिखरमारोप्यताम् । मया तावदसुरक्ष एष भारः ।

अथ वासुदेवो युधिष्ठिरभीमाभ्यामनुगम्यमानः स्वप्रवृत्तेः साफल्यं निरूप्य कृतार्थः तन्मुखप्रेक्षणेनाह—साम्प्रतं निर्वृतोऽस्मि, प्रारब्धस्य साध्यस्य निष्प्रतिबन्ध निर्वाहादित्यर्थः । तत्र निर्वृतिहेतून् प्रकाशयति—हरणमुपहृतं स्त्रीधनमानीतम् । रत्नालङ्कारमिश्र रत्नालङ्कारप्रधानं, न तुच्छधनरूपम् । पृथायाः पितृष्वसुर्नमस्कारश्च कृत । सुयाधनस्य सकलं कर्म सुभद्रापहरणादि प्रवर्तितं सकलम् । अफलतां यातं न किञ्चिदपि तत्साध्यानुगुणं संवृत्तम् । स्वपक्षानुग्रहवद् विपक्षनिग्रहस्यापि निर्वृतिकरत्वमिति तत्कर्मवैफल्यस्य पङ्क्तिनिवेशः । निःशेषामृष्टरोषः पूर्वं विपक्षभावमवलम्बमानो निरवशेषं निरस्तरोषः प्रसादकार्यमपि प्रकाशितवान्, यतो मधुनिवहैः सहागतः । सुहृत्सम्माननार्थमिति शेषः । इह स्वनगरे । असौ धर्मः धर्मात्मज इति तन्मुखप्रेक्षणेन स्वयमेवोक्तिः । सहजैः सहेति तेऽपि साक्षात्कृताः । इदानीमतःपर किं निर्वृतिकरमिति साम्प्रतं निर्वृतोऽस्मीत्युक्तम् ॥ १२ ॥

१. 'दे‍दु' क. पाठः. २. 'यः—सम्य' क. पाठः.

युधिष्ठिरः[1] — (सहर्षं) देव! वयं तावद् भवत्पादाधीनसकलपुरुषार्थसिद्धयो निर्वृताः, यतो जङ्घाकारिकवचने[2]जनितशोकान्धीकृतचेतसां नस्तत्त्वं प्रकाशयता भगवता साधु सम्पादितम् । अपिच—

स्थित्युत्पत्तिप्रलयविधयो यद्वशे प्राणभाजां
जागर्त्येतद् भुवनमखिलं जागरूके च यस्मिन् ।

---

एवं भगवतस्तटस्थवचनमपि स्वयमङ्गीकृत्य भगवत्प्रशसनपुरस्सरं प्रस्तुतां निर्वृतिमात्मनः साधयति—वयं तावदित्यादिना । वय तावद् वयमेव । नित्यनिर्वृतस्य निरपेक्षस्य तव कथं तुच्छेन संसारकृत्येन निर्वृतिर्घटते । अन्येषामपि केषाञ्चिदेवं न निर्वृतिपात्रत्वमिति वयं तावदित्युक्तम् । तावच्छब्दोऽवधारणे । अवधारणमेवोपपादयति—भवत्पादेत्यादिना । भवत्पादयो. श्रीमत्पादारविन्दयो स्मरणादेव सर्वसाध्यान्याविर्भवन्तीति पादाधीनेत्युक्तम् । न किञ्चिदपि पौरुष सहायान्तरं वापेक्षते । तत्रापि सकलानां धर्मादीनां, न खलु कश्चिदपि पुरुषार्थोऽन्यापेक्षया सिद्धः । नान्येषामेवम् । अतो वयं पञ्च मातृभार्यादिसम्बन्धिसहिता निर्वृताः परितुष्टाः । न खलु केनापि हेतुलेशेन कालत्रयेऽप्यपरितोष जानीम । कथ समनन्तरमेव दुःखेऽनुभूते निर्वृतत्व साम्यत इत्यत्राह—जङ्घाकारिकेत्यादि । शोकान्धीकृतचेतसां नः वस्तुवृत्त प्रकाशयता भगवता साधु सम्पादितम् । अस्मत्सम्बन्धेन निर्वृतियोग्यानामेषामन्तरा दु ख मा भूदितीव तत्त्वप्रकाशन कृतमिति साधु सम्पादितमित्यनेन प्रकाशितम् । अत एव निर्वृता इत्यन्य न विरोध । अपिचेति भगवत्प्रसादपात्रतानिरूपणे विशेषेण ममैव किमपि लोकोत्तरत्वं समर्थयामीत्यर्थ. । तत् प्रकाशयति—स्थित्युत्पत्तीत्यादिना । प्राणभाजा ब्रह्मादिकृमिपर्यन्ताना जन्तूनाम्

"अष्टविकल्प दैवं तैर्यग्योन्य च पञ्चधा भवति ।
मानुष्य चैकविध सङ्क्षेपाद् भौतिक सर्ग. ॥".

इति निर्दिष्टानां चतुर्दशविधानां भौतिकानाम् । स्थित्युत्पत्तिप्रलयविधयः स्थित्युत्पत्तिप्रलयानां विधयः विधानानि, सृष्टय इति वा । यद्वशे यदधीनतया व-

---

१. 'रः—दे' क. पाठ. २. 'नशो' क. पाठः.

स त्वं देवे! त्रिभुवनगुरुः शर्मणे यस्य सज्जः
सोऽहं जातः खलु परिवृढः सोऽहमेव त्रिलोक्याम्॥ १३॥

र्तन्ते। वशे इत्यनेन तदर्थं कर्तृत्वाद्यभिमानकृतः प्रयासो निरस्यते,

"प्राणिकर्मानुगुण्येन जगत्सृष्टिं करोति यः।
तस्य सर्गस्थितिध्वंसा लीलारूपा हि केवलम्॥"

इत्युक्तत्वात्। लीलापि केवलमिच्छैव। इच्छाशक्तिमात्रेणैव भौतिकानां स्थित्यादयः। प्रलयोदययोरीश्वरपारतन्त्र्येऽपि स्थितावाधिपत्यादिविशिष्टेऽवस्थाने लोकपालादीनां स्वातन्त्र्य स्फुरतु। तत्रापि तत्त्वत ईश्वरपारतन्त्र्यमेवेति प्रकाशयितुं प्रथमं स्थितिग्रहणं, नोत्पत्तिस्थितीति। भौतिकानामेवमस्तु। महाभूतसृष्टिः कथमित्यत्राह—एतद् भुवनमखिल पञ्चभूतमय चतुर्दशात्मक यस्मिंन् जागरूके जागर्ति। द्विविधं जागरण केवलं स्वात्मनि, विश्वोन्मुखतया च। विश्वोन्मुखतया यस्य जागरणे सति एतद् भुवनं जागर्ति, विकसितदृष्टिसृष्टिन्यायेनेत्यर्थः। अथवा जागरूके यस्मिन् विश्वात्मना प्रकाशमाने विराड्रूपे एतदखिलं भुवन जागर्त्यङ्गोपाङ्गादिरूपतया। अथवा जागरूके यस्मिन् नित्यप्रबोधरूपे परमात्मन्याधाराधेयभावराहित्येऽप्येतद् भुवनं प्रतिबिम्बितं मुकुरादौ मुखादिवत्,

"साक्षिभूते समे स्वच्छे निर्विकल्पे चिदात्मनि।
निरिच्छं प्रतिबिम्बन्ति जगन्ति मुकुरे यथा॥"

इत्युक्तत्वात्। स्वस्वरूपव्यतिरेकेण विश्वस्य न पृथगवभास इति वा योज्यम्। सर्वथा विश्वोत्पत्तिहेतुत्वेन विश्वात्मना विश्वातीतत्वेन च यदात्मकत्वम्। स त्वं विश्वानुग्रहाय विश्वमनुप्रविश्येदानीं यदुकुलालङ्कारभूतोऽवाङ्मनसगोचरोऽपि सर्वलोकनयनानन्दकरः। देवे! निष्क्रियोऽप्यवतारविशेषैः क्रीडन्। अत एवोद्भावितविजिगीषः, राज्यतन्त्रादिव्यवहारप्रवृत्तः, सर्वैः स्तूयमानः, अखिलभुवनव्यापी, इति दिविधात्वर्थानामेकाश्रयभूत! इति सम्बोधनम्। त्रिभुवनगुरुः न केवलमुद्धवनिमित्तं, कपिलनारदव्यासादिरूपेण त्रिभुवनवासिनां मोहान्धकारनिरोधेन ज्ञानप्रदः। शर्मणे परमानन्दाय भूताय वर्तमानाय भाविने च[1]। सर्वसाध्यानामानन्द एव फलमिति भवत्पादाधीनसकलपुरुषार्थसिद्धय इत्यनेन न विरोधः, तेषामप्यानन्दफलत्वात्। सर्वपुरुषार्थफलभूतं शर्म, तत्सम्पादनाय सज्जः बद्धपरिकरः। न तु कदाचित् प्रवृत्तः, इदानीमपि तदर्थमेवोद्यतः। यस्य मम शर्मणे

१. 'वात्रि' ग. पाठ २. 'वः' ख पाठः,

**भीमसेनः**— (स्मृत्वा सावज्ञम्) . आर्य! ममापिनाम मह्यमनर्थापगमो नातितरां रोचते। कुतः—

भ्रातुर्मे दयितामलम्बुसबुसः पापीयसा प्रेरितः
प्रध्वंसाय सुयोधनेन हरतु क्षुद्रक्रियो राक्षसः।

---

एवम्भूतस्त्व सर्ज्ञः, सोऽहं खलु जातः सोऽहमेव जननवान्। अन्येषामेवम्भूतभवत्प्रसादपात्रताभावाज्जननमपि न वस्तुभूतम्। अतोऽहमेव सफलजन्मत्वाज्जात इति वक्तुं योग्यः। भवत्प्रसादप्रकर्षनिरूपणे इयानेव न ममोत्कर्ष इति पुनरपि कथयामि सोऽहमेव त्रिलोक्यां परिवृढः। पूर्वोक्तप्रसादपात्रतानिमित्तत्वं तत्रापि योजयितुं पुनरपि सोऽहमिति निर्देशः। अहमेव, न त्वन्यः। एवम्भूतस्य भवत्कारुण्यस्याहमेव पात्रभूतः। अतःपरं किं प्रभुत्वमित्यहमेव परिवृढ इत्युक्तम्। त्रिलोक्यां, न केवलं भूमौ, लोकान्तरेष्वपि मत्तुल्यं प्रभुत्वमन्यस्य नास्तीत्यात्मप्रशंसनद्वारेण भगवत एव लोकोत्तरत्वं समर्थितम्॥ १३॥

अथ भीमः सुयोधनं प्रति नित्यानुबद्धरोष इदानीन्तनापराधस्मृत्या निजौद्धत्यसदृशं संरम्भगर्भमाह—आर्येत्यादि। ममानर्थापगमोऽपि मह्यमतितरां न रोचते। लोके निजानर्थनाशः सर्वेषां प्रीतिकरः। तथा न ममेति मह्यमिति पुनरुक्तम्। 'रुच्यर्थानां—' (१. ४. ३३) इति सम्प्रदानसंज्ञायां चतुर्थी। कथमनर्थापगमो नातितरां रोचत इत्युक्तमित्यत्र हेतुमाह—कुत इत्यादिना। **अलम्बुसबुसः** निस्सारतया तृणप्रायः। अलम्बुसबुस इत्यनादरगर्भमभिधानम्। पुंस्त्वं चिन्त्यम्। स्वत एव क्षुद्रक्रियः, राक्षसत्वात्। विशेषतः सुयोधनेन प्रेरितः। किमर्थं, **प्रध्वंसाय** आत्मविनाशायेति फलितमर्थमाह। कथमात्मविनाशकरे प्रवृत्तिः, **पापीयसा**, पापात्मनां विनाशकरेऽपि सम्पत्करत्वमेव स्फुरतीति भावः। प्रध्वंसस्य नियतत्वं प्रकाशयितुं प्रध्वंसाय प्रेरित इत्युक्तम्। भ्रातुर्मे दयितां ममात्मसमस्य सोदरस्य दयितां प्राणवल्लभामिति सम्बन्धेन हरणकर्मतया च एतद्धरणस्यात्यन्तमनौचित्यं प्रकाशितम्। हरत्विति कामचारानुज्ञाने लोट्। रक्षणात् पूर्वप्रतीतिमनुसृत्येदमुक्तम्। हरणश्रवणे इति मे मनोवृत्तिरिति भावः। अत्यन्तानिष्टकरणे प्रतिषेधस्यैवौचित्यम्। कथं तदनुमोदनम् इत्यत्र हेतुमाह—कात्यायनीमां स्वभगिनीं नाराक्षिष्यद् यदि, अस्मद्भुजो अरिकुलं निश्शेषमकरिष्यताम्। कात्यायनी

नारक्षिष्यदिमां यदि स्वभगिनीं कात्यायनी कर्कशौ
कण्डूलावकरिष्यतामरिकुलं निःशेषमस्मद्भुजौ ॥ १४ ॥

(सर्वे परिक्रामन्ति)

**वासुदेवः** — इदं तदुद्यानम्। प्रविशामस्तावत्।

(प्रवेशं नाटयन्ति)

**धनञ्जयः** — (विलोक्य) अये, अयमार्याभ्यामागतश्चक्रपाणिः।

(उपसृत्य युधिष्ठिरवृकोदरौ प्रणम्य वासुदेवमालिङ्गति)

(सुभद्राप्यागत्य क्रमेण तान् प्रणमति)

**सर्वे** — वत्से! अविधवा चिरमेधस्व।

**विदूषकः** — (क) भो! जह तुह्मे।

---

(क) भोः! यथा यूयम्।

---

स्वतो दुष्टनिग्रहोद्यता। स्वभगिनीमिति रक्षणस्य झटितिप्रवृत्तिनिमित्तत्वम्। नारक्षिष्यद् न रक्षितवती यदि। अरक्षणपक्षे इममपराधं प्रधानीकृत्यास्मद्भुजौ स्वतन्त्रौ सहायान्तरमायुधमप्यनपेक्षमाणौ। अरिकुलं, न केवलं सुयोधनम्। "अग्नेः शेषमृणाच्छेषं शत्रोः शेष न शेषयेद्" इति युक्त्या निश्शेषमकरिष्यतां नाशोपयुक्तत्वेनैकस्य शिष्टस्य पिण्डोदकदानार्थमवस्थितिमप्यसम्पाद्य साकल्येन नष्टमकरिष्यताम्। यतो भगवत्या रक्षणं कृतम्, अत एव समीहितकरणमपि न घटितमिति क्रियातिपत्तौ भूते लृङ्। कर्कशौ कण्डूलाविति भुजयोः स्वातन्त्र्ययोग्यत्वमुक्तम्। कर्कशौ कठिनौ प्रचण्डप्रहारशक्तौ। कण्डूलौ प्रतिभटालाभेन युद्धकण्डूत्या तच्छमनमपेक्षमाणावित्यर्थः। एतदरक्षणे निमित्तगौरवेणेदानीमेव रिपूणां मूलोच्छेद कर्तु युक्तम्। रक्षणेनानर्थैकदेशनिवृत्तिरेव जातेति नातितरां रोचत इत्युक्तम् ॥ १४ ॥

आर्याभ्यामिति सहार्थे तृतीया। आर्याभ्यामिति निर्देशेन तयोरपि प्रा-

---

१. 'न तावत् प्रविशामः' क पाठः

**युधिष्ठिरः**— वत्स ! धनञ्जय ! अपिनाम विप्रवासक्लेशमलीमसः समतिक्रान्तस्तव संवत्सरावधिस्तीर्थयात्राव्यतिकरः । सोऽयममुना सकललोकगुरुणा सङ्कर्षणानुजन्मना सम्बन्धहेतुरिति नः कल्याणकरः संवृत्तः ।

**भीमसेनः**— वत्स ! बीभत्सो ! प्रत्यासीदति पुरप्रवेशाय मुहूर्तः । प्रतीक्षते[1] च देवेनामुना प्रत्यानीतं सङ्कर्षणसनाथं सकलसात्त्वतचक्रं त्वदागमनम् । तत् त्वर्यतां पुरप्रवेशाय ।

---

धान्यमर्थतः स्फुरति ॥

अपिनामेत्यादि । सवत्सरावधिः सोऽय तव तीर्थयात्राव्यतिकरः समतिक्रान्तः विप्रवासक्लेशमलीमसोऽपिनामामुना सङ्कर्षणानुजन्मना सह सम्बन्धहेतुरिति नः कल्याणकरः संवृत्त इत्येकवाक्यतया समन्वयः । अन्यथापिनामेति प्रश्ने समतिक्रान्त इति विश्रान्तौ न चातुर्यम् । अनुवाद एव तत्रोचित इत्येवमुक्तम् । विप्रवासक्लेशमलीमसोऽपिनाम परस्परविरहजेन क्लेशेन विप्रवासरूपेण वा मलीमसो मलिनो, दुःखयोग्य इत्यर्थः । अपिनामेति निपातसमुदायो विरोधद्योतकः । समतिक्रान्तः सम्यगतिक्रान्त । सोऽयमिति दुःखहेतुत्वेन निरूपितस्येदानीमानन्दकरत्वेन बुद्ध्युपारूढत्वादेकीकृत्योक्तिः । कथं दुःखहेतोरानन्दकरत्वमिति विरोधमनूद्य कथयति—अमुना सकललोकगुरुणा सङ्कर्षणानुजन्मनेत्यनेन सम्बन्धस्य दुर्लभत्वं प्रकाश्यते । तादृशस्य हेतुरिति कल्याणकरत्वम् । इदानीं कल्याणकरत्वे निरूप्यमाणे विप्रवासक्लेशमलीमसत्व ममताबन्धमूलत्वान्न कार्यकरमिति कल्याणकर इत्यनेन प्रकाश्यते । संवृत्त इति नेवमस्माभिर्निरूपितं, भगवत्प्रसादेनैवैवं परिणतमिति कृतार्थता व्यज्यते ॥

प्रत्यासीदति निकटे वर्तते । अतः परं मुहूर्तनैकट्येन न कालक्षेपस्यावसरः । प्रतीक्षते चेत्यादिना च त्वराया औचित्य प्रकाशितम् ॥

---

१. 'ते दे' ख पाठ

**धनञ्जयः** — (सपरितोषम्) आर्यौ! कथमिवामुना त्रैलोक्यनाथेन मैत्रीस्वयङ्ग्राहानुगृहीतस्य मम नाभिमुखीभवन्ति सर्वाः सम्पदः ।

**वासुदेवः** — सखे! धनञ्जय! किं ते भूयः प्रियमुपहरामि ।

**धनञ्जयः** —

कात्यायन्या निशिचरकरादाहृतेयं सुभद्रा
दाता त्वं नस्त्रिभुवनगुरुः श्रेयसामागतोऽसि ।
मूर्ध्ना स्पृष्टा मुदितमनसोरार्ययोरङ्घ्रिपद्मा
विद्मः पद्मादयित! न पुनः प्रार्थनीयान् पदार्थान् ॥ १५ ॥

---

मैत्रीस्वयंग्राहानुगृहीतस्य अस्मत्प्रार्थनं विनापि स्वयमेव मैत्रीपरिग्रहेणानुगृहीतस्य सर्वाः सम्पदः कथं नाभिमुखीभवन्ति अहमहमिकया सर्वा एवाविर्भवन्तीति प्रतिकूलस्य सङ्कर्षणस्य सात्त्वतानां चागमनानुकूल्यं हृदि निधाय तथोक्तम् ॥

किं ते भूयः प्रियमुपहरामीति नाटकान्ते कार्यसंहारप्रस्तावायोक्तिः ।

तमेवोपपादयति — कात्यायन्येत्यादिना । सिद्धानि सर्वाणि भगवत्प्रसादादेवेति साधयन्नाह — कात्यायन्या निशिचरकरादिति । इतः परं किं प्रसादकार्यमिति प्रथममुक्तिः । निशिचरकरादित्यनेनाहरणस्य दुष्करत्वं कात्यायन्येत्यनेन सुकरत्वं च प्रतिपादितम् । अस्मादप्यधिकोऽभ्युदयः त्वमागतोऽसीति, यतस्त्रिभुवनगुरुः भुवनवासिनां सर्वेषामेवानुग्रहप्रदः विशेषतो नः सर्वेषां, श्रेयसां दाता बहुसुखानां मङ्गलानां दाने स्वातन्त्र्यमवलम्बमानः श्रीमत्पादारविन्दरेणुभिरिमं प्रदेशं पवित्रीकृतवान् । अतः परं किं प्रार्थनीयमिति भावः । पुनश्चार्ययोः अङ्घ्रिपद्मा मूर्ध्ना स्पृष्टाः पद्मशब्देनोत्तंसवन्मूर्ध्नि परिग्रहो ध्वन्यते । मुदितमनसोः अस्मत्सङ्गमादिना प्रहृष्टयोः । एवं मुख्येषु साध्येषु भगवत्प्रसादेन सिद्धेषु पुनरतः परं प्रार्थनीयान् पदार्थान् साध्यविशेषान् न विद्मः । न विद्म इत्यनेन कस्यापि न बुद्ध्युपारोहः । सर्वज्ञस्य तव श्रेयोन्तरं स्फुरति यदि, भवान् न विघटयिष्यतीति प्रकाशितम् । पद्मादयितेति सकलभुवनसम्पन्निमित्तभूतायाः पद्मायाः दयितस्त्वम् अस्मत्प्रार्थनस्यैव भाग्यस्य

---

१. 'य. — आ' क. पाठः. २. 'तरमहमाचरामि'। ग. पाठ..

तथाप्येतावदस्तु

(भरतवाक्यम्)

मेघाः कुर्वन्तु पृथ्वीं प्रतिनवकलमश्यामकेदारबन्धा-
माधीनासां प्रजानामपहरतु भवान् नित्यमानन्दबन्धुः ।

---

वा दारिद्य, न त्वभीष्टदाने तवेति प्रकाशितम् ॥ १९ ॥ तथाप्येतावदस्त्विति शुभशंसनाय नायकाभेदेन प्रयोक्तुर्नटस्योक्तिः । तत्सूचनाय भरतवाक्यमिति । शुभशंसनं करोति — मेघा इत्यादिना । मेघाः पृथ्वीं प्रतिनवकलमश्यामकेदारबन्धां कुर्वन्तु । वृष्टेरन्न तत. प्रजानामुदय इति क्रमे वृष्टिहेतूनां मेघाना वर्षणकार्यमाशंसे । पृथ्वीं प्रतिनवै कालोपनतया मेघजलसिक्ततया चाङ्कुरितप्रसृतदलवृत्तनालगर्भितबीजैः कलमैः श्यामकेदारबन्धाम् । तेषा वातातपक्रमिप्रभृतिभिरनुपहतत्वाच्छ्यामत्वम् । तद्याच्छादितत्वेन श्यामाः केदारबन्धाः क्षेत्रखण्डाः यस्याम् । अनेन व्रीह्यादीना परिपूर्णता प्रकाशिता । पृथ्वीं तादृशीं कुर्वन्तु । कालवर्षेण व्रीह्यादिषु समुत्पन्नेषु प्रजाना देहधारणेष्टापूर्तादिसकलकृत्यानिर्वहणं भवेदिति प्रथमं तदेवाशास्यते । पुनर्निर्बाधं स्थितानामासां प्रजानाम् आधीन् मनःपीडा इष्टानवाप्त्यनिष्टावाप्तिजनिताः भवानपहरतु, यत आनन्दबन्धुः आनन्दस्य बन्धुः । यो यस्य बन्धुः स कदाचिन्न तद्विरहित इति नित्यानन्द इत्यर्थः । अत आधिहरणं सुकरमिति भाव. । पुनश्चाहं जन्मान्तरेऽपि तव मैत्रीपात्रीभवेयं, न केवलमस्मिन् जन्मनि । जनितजगच्चक्र! जगत्त्रयनिर्माणरसिक! । तथा सति तन्मध्यपतितस्य मम जन्मान्तरमपरिहार्यमिति जन्मान्तरेऽपीति सिद्धत्वेनोक्तम् । तत्रैवं चेज्जन्मान्तरमपि हृद्यमेवेत्याह — तव मैत्रीपात्रीभवेयमिति । मैत्रीति परिचयकारणभूता भक्तिरिह विवक्ष्यते । अपात्रस्यापि भवत्प्रसादेन पात्रत्वमाशास्यत इति च्विप्रत्ययेन प्रकाशितम् । पात्रीभावे विशेषमाह — जलधरपटलश्रीशुपश्चक्रपाणेरिति । अनुसन्धानाय सकलविग्रहोपलक्षणम् । पीताम्बरकिरीटवनमालाकौस्तुभशङ्खादिशोभितस्य । तथानुसन्धाने फलमाह —प्रध्वस्तध्वान्तवृत्तेरिति । प्रध्वस्ता निश्शेषं निरस्ता ध्वान्तस्याज्ञानान्धकारस्य वृत्तिर्येन । उपासकचित्तेष्विति शेष· । प्रध्वस्तध्वान्ता वृत्तिर्यस्येति वा । प्रध्वस्तध्वान्तेषु निरस्तमोहेषु योगिषु वृत्तिर्वर्तनं यस्येति वा । एव-

प्रध्वस्तध्वान्तवृत्तेर्जलधरपटलश्रीमुपश्चक्रपाणे-
मैत्रीपात्रीभवेयं तव जनितजगच्चक्र ! जन्मान्तरेऽपि ॥१६॥

(इति निष्क्रान्ताः सर्वे)

पञ्चमोऽङ्कः ।

---

समाप्तमिदं सुभद्राधनञ्जयं नाम नाटकम् ।

---

भूतस्य तव मैत्रीपात्रतयैव मम सकलपुरुषार्थलाभ इत्येतदेवाशास्यते । एवं नाटकान्ते नायकरूपाभेदेन नटेन, तन्मुखेन प्रबन्धनिर्मात्रा महाकविना च सकलक्षेमाय शुभशंसनं कृतमिति सर्वं मङ्गलमस्तु ॥ १६ ॥

शब्दार्थवपुषोरेष शिवयोर्नाटकच्छलात् ।
यथामति विचारोऽस्तु विद्वत्प्रीतिकरोऽपि नः ॥

इति शिवरामकृते विचारनिष्कनाम्नि सुभद्राधनञ्जयव्याख्याने

पञ्चमोऽङ्कः ।

# श्लोकानुक्रमणिका ।


| | पृष्ठम् |
|---|---|
| अङ्घ्रिक्षेपै | १४२ |
| अङ्घ्रिभ्यामम्ब | १८९ |
| अतिलघयसि | ४४ |
| अधुना हृदय | ९१ |
| अन्तर्भवद्रिपु | १४३ |
| अपरगिरि | ३७ |
| अम्बास्तन्यम | ११ |
| अविदितभय | १५६ |
| अस्मच्छत्रक | १५५ |
| अस्यामुल्लस | १०६ |
| आक्रन्दन्तीम | १९ |
| आत्मान वि | ४८ |
| आसिक्तौ | ६ |
| इमौ कर्णौ | ६४ |
| उत्तुङ्गघोण | ५ |
| एकस्या | ३१ |
| कथय कपिल | १० |
| कष्ट हा करवा | १६९ |
| कात्यायन्या | २०० |
| कार्या पिष्टात | १६१ |
| किरीटिन्! मा | १८८ |
| कुर्वन् कौरवे | १५४ |
| कौन्तेय दारा | १५३ |
| क्षितक्षौमौ | २३ |
| क्षितश्रद्दयच्छि | १५१ |
| गत्वा पदानि | १७५ |
| गृह्णीष्व प्रहर | १३० |
| घर्माम्भ कणि | २५ |
| चकितचकित | ९८ |
| चलकुण्डल | २२ |

| | पृष्ठम् |
|---|---|
| चेतोभूरकरो | १६५ |
| जानन् ना दुर्दशां | १२० |
| ज्योत्स्ना चन्द्रमसा | १५२ |
| ज्वलदवनिभिरा | १७ |
| ता प्रिया प्रमथ | ७० |
| तिष्ठति सत | ७७ |
| दुर्लभगुणगण | १५८ |
| दृप्तद्विपद्व | १५१ |
| ध्रुवमनुभव | ३६ |
| नास्यामाश्रा | १८२ |
| निष्यन्दमान | ६३ |
| नेत्रे कर्णौ | ८५ |
| पद्माना पा | १४९ |
| परिक्षत प | १५९ |
| पात जल | ४१ |
| पातारो बल | १४८ |
| पाताल चेत् | १४७ |
| पार्दौ चक्रप्रति | ९ |
| पार्थ तीर्थोप | १३२ |
| पुरसुरगता | १७२ |
| प्रणयगुरभि | १६० |
| प्रत्यासीदत् | ५९ |
| प्रत्यम्यनरवद्वि | १५७ |
| भद्र सौभद्रस्ते | १९० |
| भवति धनुरम् | ९६ |
| भवति नियति | ९१ |
| भ्रमदलिकुल | ५१ |
| भ्राता धर्म | ३४ |
| भ्रातुर्मे दयिना | १९७ |
| मन्दप्रेङ्खितप | ८९ |

| | पृष्ठम् | | पृष्ठम् |
|---|---|---|---|
| मम हि रागमि | ७४ | वाप्यामाप्यायि | ७८ |
| मया किं सा नोढा | ४५ | विनष्टमददिग्गज | १३६ |
| मलयशिखर | १०० | विपृथुरयमपे | १३७ |
| माणिक्योन्मिषि | १२३ | विश्लिष्यद्दल | ५५ |
| मेघाः कुर्वन्तु | २०१ | वेप दोपा | ४७ |
| यत. ग्राता | १५७ | व्यालोल | १३ |
| यमः शरण | १७७ | शिखिनि शल | १४ |
| यस्याः कृते | ५० | श्रमजलजटिल | १०३ |
| याच्ना प्रेम्णा | ९३ | श्रमजलभिन्नं | ३१ |
| रत्नालङ्कार | १९४ | सह सुरवनि | १२१ |
| रागप्रपञ्च | ११३ | सान्द्रैः कृता | ४६ |
| लक्ष्मीपङ्कज | १ | सार्धं प्रेम्णा | ११७ |
| लक्ष्मीर्धर्मसुते | १७३ | सौन्दर्य | २७ |
| लक्ष्यः क्षेपः | १४५ | स्थित्युत्पत्तिप्र | १९५ |
| वल्लीपार्श्वे | ११६ | स्निग्धा मु | ८ |

## कथासारः ।

**प्रथमाङ्के**—श्रीमतो धनञ्जयस्य सुभद्राप्राप्तये द्वारवतीं गच्छतोऽलम्बुसकृच्छ्रात् सुभद्राया. परित्राणं, तत परस्परगुणाकर्णनपूर्वप्ररूढे परस्परानुरागे विद्यमान एव सन्दर्शनघटनायामेतस्यामविदितपरस्परयोरेवोभयोर्नवयोरिव नवानुरागोदय, अथ सुभद्रायामन्याविदित गरुत्मता द्वारकां नीतायां पूर्वानुरागानुगुणं चेष्टितुमर्जुनस्य परिव्राजकवेषपरिग्रहप्रतिज्ञा, तदनु नवानुरागविषयभूताया गात्रिकामुपलभ्य तत्र स्वनामोट्टङ्कदर्शनेन तस्याः स्वस्मिन्ननुरागमाकलय्योभयप्राप्तये द्वारकाप्रयाणं चोपवर्ण्यते ॥

**द्वितीयाङ्के**—यतिवेषधारिणः फाल्गुनस्य सङ्कर्षणवासुदेवाभ्यां सत्कारः, तत सङ्कर्षणाज्ञयैव तस्य माधवीलतामण्डपप्रापणं, तत्रान्तर्धाय स्वप्रतीतिविषये द्वे अपि सुभद्रामेकामेव पश्यतस्तद्वाक्यैरेव पुरुषद्वयविषयकत्वेऽपि तस्या भावबन्धस्यान्तत. स्वैकविषयकत्वं निर्धार्य सुभद्रासमीपोपसर्पणम्, अथैनं दृष्ट्वा त्रिधाभूतमदनप्रवाहायां सुभद्रायां यथावत् परिपूज्यास्य पुरतः स्थातुमक्षमतया भिक्षासम्पादनाय गतायामर्जुनस्य विदूषकाय स्वानुष्ठितयावत्कृत्यनिवेदनं च प्रतिपाद्यते ॥

**तृतीयाङ्के**—तथा तथा मदनावस्थामनुभवन्नर्जुनो विदूषकेण सह यावद् विनोदक्षमं सुभद्रावासभूत सहकारमण्डपमुपसृत्यान्तरधीयत, तावत् तस्यास्तृतीयमनोरथस्यापि स्वमेव विषय तद्वाक्येन निश्चिकाय । ततस्तत्तन्मदनकृच्छ्रमनुभवितुमपारयन्त्या सुभद्राया स्वजन्मैव पुरुषत्रयविषयाभिलाषेण कश्मल विचिन्त्य मर्तुं व्यवसितायामर्जुन. प्रकटीभूय. तस्या. भावप्रवाहत्रयस्यापि. स्वमेव. विषय. निरूपयन् गान्धर्वाय तामुपरुरोध । अथ वासुदेवानुमतिमेव प्रतीक्षमाणाया तस्यां स्मृतमात्रसन्निहितौ माधवमहेन्द्रौ तयो परिणय यथावन्निरवर्तयताम् ॥

**तुरीयाङ्के**—सुभद्रया वाह्यमानतुरग रथमारूढार्जुनेऽनुधावतोऽन्धकवृष्णियोधवीरान् बाणवेगैर्निवर्त्य सुभद्राप्रार्थनया क्रुद्धमपि मुसलायुधमुपेक्ष्य खाण्डव-' प्रस्थमनुगते वासुदेवो बलभद्र प्रसाद्य 'विवाहोत्सवमनुभवितुं खाण्डवप्रस्थं प्रति सौवस्तिकगमनायान्धकचक्र सन्नाहये'ति सात्यकिमादिदेश ॥

पञ्चमाङ्के — सुभद्रामलम्बुसेन रक्षसापहृत्य विशसितां श्रुत्वार्जुनः शोकावेगपरवशो मोहादुत्तारितोऽपि विदूषकेण दुःखस्यासह्यतया मर्तुं व्यवस्यन् वीरेऽवतारितो यावद् धनुरादत्ते, तावद् देवी कात्यायनी गृहीतपाञ्चालीवेषा तस्माद् रक्षस परित्राय सुभद्रामर्जुनाय समर्पयन्ती विस्मितं तमकरोत्। अथ साक्षाद् द्रौपद्यामत्रागत्य धृताद्भुतायां देवी प्रदर्शितस्वरूपा सर्वत आशिषः प्रयुज्य तिरोदधे। ततो युधिष्ठिरवृकोदरवासुदेवैः स्वगौरवानुरूपमभिनन्दितौ सुभद्रार्जुनौ समीहितसिद्ध्या परमानन्दनिर्वृतावभूताम् ॥